S3/

[महेन्द्र]-संस्कृत-विश्वविद्यालयस्य षष्ठं प्रकाशनम्

# [श्री]कृष्णश्रीदामचरितादर्शः

(पौराणिक उपन्यासः)

लेखकः

पूर्णप्रसादः 'ब्राह्मणः'



प्रका[श]कः

महेन्द्र-संस्कृत-[वि]श्वविद्यालयः

महेन्द्र-संस्कृत-विश्वविद्यालयस्य षष्ठं प्रकाशनम्

# श्रीकृष्णश्रीदामचरितादर्शः

(पौराणिक उपन्यासः)

लेखकः

पूर्णप्रसादः 'ब्राह्मणः'



प्रकाशकः

महेन्द्र-संस्कृत-विश्वविद्यालयः

प्रकाशकः

महेन्द्र-संस्कृत-विश्वविद्यालयः

वेलझुण्डी, दाङ्ग

रचनाकालः- २०४५ विजया दशमी

प्रकाशनकालः- २०५०

प्रथम संस्करणम् :- १,२०० प्रति



मूल्यम्:- ३५।- रूप्यकाणि

मुद्रकः- सिर्जना प्रिन्टर्स, टेकु, काठमाडौं

☎ २-१४९७१

कम्प्यूटर निर्देशनः डी.आर. थापा

# प्रकाशकीयम्

- स्वर्गीयः पूर्णप्रसादो ब्राह्मणः महेन्द्र-संस्कृत-विश्वविद्यालयाय संस्कृतभाषायां प्रणीते द्वे कृती स्वजीवनकाले एव प्रकाशयितुकामः ससर्वाधिकारं समार्पिपत् । तयोरेका कृतिः 'रामराज्यम्' २०४९ तमे वैक्रमाब्दे प्रकाशितम् । अपरा कृतिरियं प्रकाशिताऽनेन रूपेण २०५० तमे वैक्रमाब्दे । लेखकस्य देहावसानानन्तरमेव उभयोः प्रकाशनं समभवत् ।

- संस्कृतसाहित्येऽधीतिनो मनीषिणोऽवगच्छन्ति यत् विशाले संस्कृत-साहित्यागारे कादम्बरी-दशकुमारचरित-शिवराजविजयादीनि त्रिचतुराण्येव गद्यकाव्यानि सन्ति । अस्यां स्थितौ सामाजिकमुपन्यासं संस्कृते लिखति चेत् सौभाग्यमेवास्माकमिति धिया यथाप्राप्तमयं प्रकाशितः ।

- यद्यपि कादम्बर्यादिगद्यकाव्यैरस्य तुलना सूर्याग्रे दीप इव, यतोऽत्र काव्यकलोत्कर्षशव्दार्थालङ्कारच्छटा-रससमावेश-ध्वनिचमत्कार-रचनाप्रौढि-गाढबन्धादयो नैव सन्ति, तथापि समाजस्य कृते 'सत्यं शिवं सुन्दरम' इत्यादर्शो विद्यते, वर्तन्ते च समाज-राजनीति-जातीयसंस्कृतिबोध-फलनिरपेक्षकर्मप्रवृत्यादयो वैदिकादर्शाः । अयमुपन्यासः लेखनकालभवां राजनीतिम् आर्यजातिस्वीकार्यसमाजनीतिञ्च प्रस्तुवन् काव्यकलाप्रौढिप्रदर्शनं नापेक्षते, अपेक्षते रामराज्यादर्शम् निष्कामकर्मयोगं, समाजसेवाभावञ्च ।

- लेखकेनात्र अधुनातनेषु संस्कृत-समाचार-पत्रेषु प्रयुज्यमाना वाग्व्यवहार-प्रधाना भाषा-शैली स्वीकृता । अत एव 'गद्यं कवीनां निकषं वदन्ति' इति निकषोपले नायं परीक्षणीयः । अस्य महत्वं तु मानवीयमूल्यसंपादने,

स्वच्छराज्यादर्शो कर्मयोगे च विद्यते । वि.सं. २०४४/०४५ तमाब्दभवां नेपालीयराजनीतिं तज्जन्यविकृतिं च समाश्रिताया भावनायाः समुद्गतोऽयमुपन्यासः- तदानीं नेपाले प्रचालिता राज्यव्यवस्था कीदृगासीत् ? नृपो जनसम्पर्कात् कियद् दूरं यापितः ? तानासाह-शासनयन्त्रेण प्रजातन्त्रम् आदर्शराजतन्त्रं च समीहमाना नेतारः कथं कारागारे निपातिताः ? अस्यां स्थितौ पीडितहृदयेन उपन्यासोऽयं निबद्धः

- अस्योपन्यासस्य कथावस्तु श्रीमद्भागवताद् उद्धृतम् । तच्च नाममात्रम्, औपन्यासिककृतेः सोपानमात्रम् । श्रीमद्भागवतस्य दशमस्कन्धोत्तरार्धे ८०-८१ तमयोरध्याययोः षडशीति (८६) श्लोकैः श्रीकृष्ण-श्रीदाम्नोः सतीर्थ्यसम्बन्धः प्रदर्शितः । दारिद्र्यपीडितया पत्न्या आग्रहेण स्वेच्छया च श्रीदामा याचितान् चतुर्मुष्टिपृथुकतण्डुलान् उपायनरूपेणानीय द्वारकां गच्छति, श्रीकृष्णस्तं संमानयति, परस्परं संल्लापा भवन्ति, श्रीदाम्नाऽऽनीतम् एकमुष्टिपृथुकं श्रीकृष्णः खादति, श्रीदामा गृहं हर्म्यादिकं विपुलवैभवं लभते, अनासक्त एव श्रीदामा तद्वैभवं भुङ्क्ते " इति कथा संक्षेपेण वर्णिताः अत्र तु श्रीदाम्नो द्वारकागमनात् पूर्वभवा नैका घटनाः संयोजिताः, कल्पिताः । श्रीदामा सविस्तरं समाजनेता राजनेता च प्रस्तुतः । उपन्यासनायकः श्रीदामा करूषदेशाधीशस्य शासनयन्त्रेण मुहुर्मुहुः कारागारे निपातितः सकलत्रः सापत्यो निर्धनः श्रीदामा भौतिकवैभवहीनोऽपि बुद्धि-वैदुष्य-सम्पन्नो लोकनेता बभूव । सेतु-चिकित्सालयानाथालयादिनिर्माणकार्येषु ग्रामीणान् प्रेरयन् सत्सङ्गसभासु प्रवचनं कुर्वन् स समाजसेवाधर्मस्य प्रचारकः, राजकर्त्तव्यानि निर्दिशन् राजनीतेश्च प्रवक्ता ।

- उपन्यासेऽस्मिन् समस्या काचन समुद्घाटिता, तस्याः समाधानमपि प्रस्तुतम् । करूषदेशस्य प्रचलितराज्यव्यवस्थाया विरोधी, विद्रोही, आन्दोलनाय जनता-प्रेरकः जननेता श्रीदामा अविवेकवता तानाशाहशासनयन्त्रेण भूयोभूयः कारागारे निबद्धः अथ च करूषाधीशेन भूतपूर्वप्रधानमन्त्रिणः परामर्शमनुसृत्य श्रीदाम्नः प्रवचनं श्रुत्वा निर्लोभः निर्वैरः निष्कामकर्मयोगी सर्वभूतसुहृत् श्रीदामा राज्यविद्रोही वा नृपविरोधी नैव भवितुं शक्नोति, तं कारागारे निपातयत् शासनयन्त्रमेव अपराधीति निर्णीते सति स राजपूज्यः सञ्जातः ।

- एवं नायकस्य श्रीदाम्नश्चरित्रे शान्तरसप्रवाहो दृश्यते । स राजप्रासादात् प्राप्तं द्रविणवैभवं याचकेभ्यो ददाति, । श्रीकृष्णात् प्राप्तं हर्म्यादिवैभवं नोपभुङ्क्ते, श्रीकृष्णप्रदत्तं वैभवं परित्यज्य स निःस्पृहः प्राक्तनजीर्णकुटीरमधिवसति ।

- आदितोऽन्तपर्यन्तम् उपन्यासे कर्मयोगस्य महत्ता प्रस्तुता । कर्मयोगसाधनैव मानवीयपुरूषार्थ इति मतमुपन्यासकारस्य वर्वर्ति । अथ च मायापतेः श्रीकृष्णस्य मायावशीभूतः श्रीदामा वाप्यां स्नानं कुर्वन् नागलोकं प्राप्नोति, तत्र च नागकन्यां प्रमीलां परिणीय नागलोकस्य राज्यञ्च लब्ध्वा एकोनपञ्चाशद्वर्षाणि यावद् धर्मेण नागलोकीयप्रजापालनं करोति । अयमंशः उपन्यासकारस्य उत्कृष्टं कल्पनाचमत्कारं द्योतयति ।

- आशास्यते आधुनिकशैल्यां निबद्धेनानेनोपन्यासेन रसिकाः साहित्यिका अवश्यमेव काव्यात्मिकां तृषां प्रतिहनिष्यन्ति ।

-- अन्ते च विश्वविद्यालयाय प्रकाशननिमित्तम् एतद्ग्रन्थस्य समर्पयितारं तत्रभवन्तमुपन्यासकारं प्रति बहुशः कृतज्ञता ज्ञाप्यते । तथा एतद्ग्रन्थमुद्रणकाले सत्यामपि प्राध्यापनस्वीयानुसन्धानकार्यव्यग्रतायां मुद्रणयन्त्रगत त्रुटिसंशोधन (प्रुफ रीडिङ्ग) कार्ये अमूल्यसमयव्ययपूर्वकं सहयोगप्रदायिने सुधिये उपप्राध्यापक-श्रीदुर्गादत्तशर्म्ममहाभागाय शतशः साधुवादान् समर्प्य प्रकाशनसहयोगिभ्योऽन्येभ्यश्च धन्यवादानुपहरन्तो विरमाम इति शम् ।



# सभक्ति समर्पणम्

विश्वशान्तिसमृद्ध्योः कारणभूतयोर्विश्वबन्धुत्वभ्रातृत्व-
भावनयोःप्रसूभूतायास्तत्र भगवत्याः सुरभारत्याःसंर-
क्षणसंवर्धनभारं स्कन्धेन वहमानाय विश्वार्थकवि-
द्याप्रदानशक्तिमत्त्वेनाऽन्वर्थनाम्ने महेन्द्रसंस्कृत-
विश्वविद्यालयायाऽस्मच्चिराकाङ्क्षामूर्तरूपा-
य सभक्ति, सविनयं, ससर्वाधिकारं
च समर्पयामीमम्
'श्रीकृष्णश्रीदामचरितादर्श'
नाम
संस्कृतोपन्यासम्।



❀❀❀

- लेखकः

## श्रीरामश्रीकृष्णस्मरणात्मकम्
## मङ्गलाचरणम्

यत्कार्यायं दशास्य–कंसप्रमुखा भूपा दिवं प्रेषिताः
आनीताः पृथिवीं सुराश्च कपिगोपालत्वसंरूपिताः ।
शास्तॄणामपि शास्तृ यच्च जगताम्, वेदादिशास्त्रैरपि
दुर्बोधं ह्यतिदैवतं किमपि तत् तत्त्वं शुभायास्तु नः ॥



❀❀❀

## श्रीगुरुवन्दना

यत्कृपा मां प्रेरयति सदा यज्ञिय-कर्मसु ।
समीमांसं गमयति चाऽर्यगृह्येषु वर्त्मसु ॥
तं प्रतीक्ष्यं गुरुं नत्वा जुननाथसमाह्वयम् ।
उपन्यस्यामि कृष्णस्य श्रीदाम्नश्च कथामिमाम् ॥



श्रीदामा स्वपत्नीम् सुशीलाम् प्रोवाच- "वृथा त्वां नियतिमेव साम्रेडं किमाक्षिपसि सुशीले । सर्वोत्तमा संपत्तिस्तु नृणां सन्तोष एव भवति । स्वगृहे यद्यावदस्ति, तस्मिन्नेव नृभिः सन्तोषः कर्तव्यः । तथा न शक्येत चेदपि सन्तोषाधानायाऽभ्यासोऽपि कर्तव्यः तथात्वे मनसि शान्तिर्भवति । तन्मैवं चिन्ताशीला भव ।"

चैत्रमासस्य मध्याह्नसमयोऽस्ति । सूर्यातपो ललाटं तपति । त्रिपुराग्रामप्रान्त एकम् जीर्णशीर्णं पर्णकुटीरमस्ति, तस्याऽग्रतो लघु प्राङ्गणं च । तस्य दक्षिणतः पूर्वकोणे पश्चिमकोणे च निखातयोर्द्वयोर्लघुकाष्ठस्तम्भयोः संबद्धायां रज्जौ आर्द्राण्यर्धजीर्णानि धौतादीनि वस्त्राण्यवलम्बितानि सन्ति । कुटीरस्योपदेहलि भूमिकायामास्तृतकटायाम् निषण्णौ श्रीदामदम्पती संलपन्तावास्ताम् । निकटे एकः सप्तवर्षीयो बालकः पुत्रः, अपरा पञ्चवर्षीया बालिका पत्री च मातुः शाटीमाकृष्य क्रन्दन्तावास्ताम्- "मातः क्षुधितोऽस्मि, मातः क्षुधिताऽस्मि" इति । अन्यस्त्रिवर्षीयो बालकस्तौ द्वौ क्रन्दन्तावेकदृष्ट्या समौनं पश्यन्नासीत् । "स्वतो जीर्णां शाटीं पुनराकृष्य विदारयथः ?" इति क्रन्दन्तौ तौ निर्भर्त्स्य, "क्षणं प्रतीक्षेथाम्" इति हस्तेन तौ स्तोकमपसार्य च सुशीला पतिं प्रत्युवाच- "क्षुधितयोरेतयोर्बालकयोरेतादृशं करुणं क्रन्दितं भवान् न शृणोति ? ईदृश्यां स्थितौ कथङ्कारं सन्तोष आधातुं शक्यते ? कुत्राऽस्ति स्थानं सन्तोषस्य ? भवांस्तु किमप्येतन्न जानाति । "अद्याऽमुकस्थाने सेतुनिर्माणाय जनसंघटनं कर्तव्यमस्ति, अद्याऽमुकस्थाने ब्रह्मचर्याश्रम उद्घाट्योऽस्ति, अद्यामुकस्थाने धर्मशाला-निर्माणाय, अनाथालयनिर्माणाय, असहाय-पीडित-स्वास्थ्योपचारालय-निर्माणाय वा जनसभा कर्तव्याऽस्ति' इत्यादीनि नानारूपाणि स्वकार्याणि प्रदर्शयन् भवांस्तु सदा गृहाद् बहिरेव भ्राम्यन् भवति । सन्ध्यापूजापाठसमयवर्जम् गृहे तु भवान् निवसत्येव नहि । जातु गेहेऽवस्थितेऽपि विजने स्थितः किञ्चिल्लिखत्येव, पठत्येव, अथवा निमीलितनेत्रः किञ्चिद् ध्यायत्येव, कञ्चित् स्तौत्येव । साधारणेन, व्यावहारिकेण, गृहस्थितिसमाधायकभावेन न जात्वपि भवान् गृहेऽवतिष्ठते तद्विषये चिन्तयति च । केवलमहमेकाकिनी अबला किं करवाणि ? अतोऽहं त्वां नियतिमाक्षिपामि ।"

श्रीदामा-'अहमपि गृहस्थितिं तु समाधातुमना एवाऽस्मि । केवलमुचितस्योपयुक्तस्य च मार्गस्याऽदर्शनात् तद्विषये किंकर्तव्यमूढः सञ्जातोऽस्मि । प्रतीक्षस्व, त्रिचतुरदिनाऽभ्यन्तरे किञ्चिद् विचिन्त्यैव वक्ष्यामि । अद्य तु यथा त्वं ब्रवीषि संलपनायाऽप्यवकाश एव नास्ति । अद्य सेतुनिर्माणनिमित्तक उपवेशोऽस्ति । समयोऽतिवर्तते । गच्छाम्येवाऽधुना तु ।"

तदाकर्ण्य सुशीला विहस्य प्रोवाच- "तर्हि गच्छतु गच्छतु भवान् द्रागेव । अन्यथा किमर्थं विलम्बत इति सर्वे तेऽत्रैवाऽगच्छेयुः यदि ते सर्वेऽत्राऽगच्छेयुः, खादतपिबतारूपः शिष्टाचारस्तु परत एवाऽस्ताम्, तेषु कैश्चिज्जलमात्रे याचितेऽपि तदर्पणायाऽहं गृहाद्बहिर्निर्गन्तुमपि न शक्नोमि । विलोकयतु भवान्-एवमुत्कीर्णं जीर्णं च निचोलं, शाटीं च परिधाय कथं तेषां समक्षम् बहिर्निर्गच्छानि ? । यत्राऽस्त्युपवेशः त्वरितं गम्यताम् । परम् साम्प्रतमेव श्रावयामि- अद्यतनं रात्रिभोजनं कोद्रवतरलया निर्वर्तनीयम् भविष्यति । स्तोकः कोद्रवोऽस्ति, तमेव पिनष्मीदानीम् । हन्त । तादृशं महदुद्देश्यं हृदि निधाय वहिर्निर्जिगमिषुणा भवता एवमप्रियं श्रोतव्यम्, मया चैवं विप्रियं वचः श्रावणीयम् । किमेतच्छोभनं जातम् ? तेनैवाऽहं स्वनियतिमाक्षिपामि । भवान् वृथैव कथयति माम्- "माऽऽक्षिप स्वां नियतिमिति ।" तदन्यं कमाक्षिपानि ? ।"

श्रीदामा- 'सर्वोऽयं गृहस्थितिनिरपेक्षस्य ममैव दोषसमुच्चयोऽस्ति । तेनाऽहमेवाऽस्मि वस्तुत आक्षेप्यस्तु । यतोऽत्रत्या ग्रामवन्धवो यथाऽऽचरन्ति, यद्यहमपि धनार्जनाय तथैवाऽऽचरिष्यम्, तर्हि शनैः शनैः गृहसमस्यासमाधानम् क्रमशस्त्वच्चिन्तानिरासश्चाऽभविष्यताम् ।"

सुशीला -'नो नो नो । नाऽहं ब्रवीमि भवतस्तथा वर्तनाय । एतादृशमेव कष्टं साहं साहं समर्जितां तावतीं भवत्प्रतिष्ठामस्माकं क्षुद्रोदरपूरणाय नाऽहं दिधक्षामि । केन हेतुना वयमत्र ग्रामे निर्धनाः स्म इति सर्वे ग्रामजना जानन्ति । तेनैव सुकृतेन भवन्तमत्र वाऽन्यत्र कोऽवधीरयितुं शक्नोति ? भवतः सहधर्मिणीत्वस्य, व्यक्तित्वस्य च व्यपदेशेन को वा मामप्यवहेलयितुमत्र शक्नोति ? येनाऽहमनवरतं गर्वामि । तेन नो भवान् ममाऽक्षेप्यः । यतो भवत एवं विश्रुतं स्थितप्रज्ञचरितम्, एवं साधीयसी कर्मनिष्ठा चाऽस्माकम् अक्षय्या संपदस्ति, अनर्घम् वैभवं च । नाऽस्त्येव प्रयोजनमप्यस्माकं तथाकथितस्य धनस्य । देहयात्रार्थमेव किञ्चिदावश्यकमासीत् । यद्यस्मन्नियतिरवाञ्छिष्यत्, सहयैर्मार्गैरस्मत्समस्यां, लघ्वीमतिलघ्वीम् समाधास्यत् । तेन तामेव स्वां नियतिमहं पौनःपुन्येनाऽक्षिपामि । अलं वृथा विस्तरेण । न कालोऽयं स्थातुम् । गम्यताम् द्रुतं गम्यताम् पुनर्निवर्तनाय । सति विलम्बे ते समागच्छेयुः । आतिथ्यशक्तिरत्र नास्ति इत्यहं बिभेमितमाम् ।"

ततः स्वपत्नीमामन्त्र्य श्रीदामा गृहान्निर्गतः । दश पञ्चदश पदानि गत्वा, पुनः परावृत्य स स्वपत्नीमाहूय प्रोवाच- "सुशीले । कपोती

नवप्रसूताऽस्ति विटङ्के । किञ्चित्कोद्रवं विकिर बहिः प्राङ्गणे । सा स्वपृथुकौ आहारयतु" ।

"तदहमपि स्मरन्त्येवाऽसम्"-- इत्युक्त्वा सुशीला गृहं प्रविवेश ।

कर्मयोगिसङ्गेन साधारणानां मनस्यपि अन्यैवाऽनिर्वचनीयाऽतिमर्त्या भावना समुदेतीति कियानस्त्यवाङ्मनसगोचरो महिमातिशयः कर्मयोगस्य । तथा दुःखविपज्जालजटिलायां स्थितावपि सुशीला पत्युर्भक्तौ, शुश्रूषायां च सदा समर्पिता स्वनिष्ठाया नैव स्तोकमपि विचलति । तदेवाऽस्ति गृहम्, करुषदेशे त्रिपुराग्रामे पुराकाले कान्यकुब्जत आगत्य प्रवसता श्रीदाम्नः प्रपितामहेन निर्मितमतिजीर्णशीर्णम् । तेनैव सहनिर्मितानि समसामयिकानि अन्यानि ग्रामगृहाणि कति वारान् स्थानान्तरितानि, नवीकृतानि, परिष्कृतानि, विभूषितानि । तत्तु सदैकरूपमस्ति मलिनम्, अश्रीकम, अनुपस्करम् । तत्र न जातु कश्चिदुत्सवो जातः, न जातु समवेतानां केषाञ्चिद् भद्रजनानां सपीतिः सग्धिर्वा जाता । न कदाचिदार्थिकसन्तोषजाऽवदाता स्मितरेखा गृहिण्या रदनच्छदे समुदियाय । न च तस्या नासया, कर्णाभ्याम्, गलेन, वक्षसा वा स्वर्णाभरणानि, रत्नाभरणानि वा जातु प्राप्तानि । न च तत्र गृहाङ्गणे स्वच्छसुन्दरवसनैर्हृष्टपुष्टैर्बालकैर्जातु क्रीडितम्, रिङ्गितं च । न चाऽत्र सरसा आकर्षका सुखजीवनाशाप्रदा वार्ताप्रसङ्गाः, हर्षामोदप्रदा मनोरञ्जनकार्यक्रमा वा जातुचन अश्राविषत, अदर्शिषत । तथात्वेऽपि स्वपतिदेवस्य कर्मयोगसाधनां सफलयितुं सर्व दुःखं साहंसाहं सधैर्येणैव मनसा, प्रसन्नेनैव वदनेन गार्हस्थ्यं निर्वहति सा साध्वी सुशीला । यद्यसाधारण प्रकृतिर्महिलारत्नम् सा नाऽभविष्यत्, तादृश्यां विपदि तथा प्रस्तरवत् दृढीभूय स्थातुं नाऽशक्ष्यत् ।

सुशीला कोद्रवपिष्टस्य द्वे रोटिके आनीय बालकाभ्याम् ददत्यासीत् । तदैव काचित् प्रतिवेशिनी तत्र समागतवती, तद् वीक्ष्योक्तवती च- "ईदृशे भीष्मे ग्रीष्मेऽपि बालकेभ्यः कोद्रवस्य रोटिके ?"

सुशीला सस्मितम् प्रत्यूचे- "एतदेवाऽस्ति गृहे अन्यत् किं ददानि ?"

प्रतिवेशिनी- "किं ब्रवीष्येतादृशम् ? सांप्रतम् चैत्रस्याऽपि विंशतिरेव दिनानि गतानि । अद्य प्रभृत्येव कोद्रववर्जमन्नमन्यन्नास्ति गृहे । प्राग्भाद्रात् गृहे नवान्नप्रवेशो न भवति । एवं स्थितौ आगमिष्यतश्चतुरो मासान् स्वयं किं भुङ्क्षेऽन्यांश्च किं भोजयसे ?"

सुशीला- एष एवाऽस्ति चिन्ताया विषयः । कि करवाणि ।"

प्रतिवेशिनी-'किं करवाणीत्येवं किंकर्तव्यविमूढभावेन किं भवति ? प्रतिवर्षमेवमेव कष्टं कथं सहसे भगिनि । धनार्जनमार्गे प्रवर्तनाय स्वस्वामी साग्रहमनुरोद्धव्य एव त्वया । अन्यथा भविष्ये महत्कष्टं निर्वेष्टव्यं भविष्यति

तव, तव परिवारस्य च। स्वगृहस्यैवं दुःखकष्टवार्तामपि न श्रावयसि, प्रतिदिनम् मुहुर्मुहुः ?"

सुशीला ईषद् विहस्य तां प्रत्यूचे-'यावदहं गृहस्थितिं यथावत् विवृत्य तत्समाधानाय चिन्तयतु भवानितिमन्दमन्दमनुरुणध्मि, तावत् स तदाकर्ण्याऽपि तूष्णिकामेवाऽस्ते, ओमपि न ब्रूते।"

प्रतिवेशिनी- "त्वमेवाऽकर्मण्या नारी। साग्रहं सपरिकरबन्धं च कर्तव्ये (नुरोधे) किमर्थं मन्दमन्दोऽनुरोधः कृतस्त्वया ? प्रत्यहं विवृत्य श्रावणीये किमर्थं जातुचिदेवाऽश्रावयः स्वगृहस्थितिविवरणम् ?"

तदाकर्ण्य स्मयमाना सुशीला प्रत्यवोचत्- "अग्रजे। तथा कटुभावेन, तिग्मभावेन च तमाग्रहीतुमहं संकुचामि। यतः स कर्मयोगस्यं महत्यां साधनायामस्ति ?। तस्यामस्माभिः स्वक्षुद्रोदरपूरणाय कथमन्तरायः कर्तव्य इति मे मतिर्भवति। तुलनायां कृतायां सधनात्सधान्यात् समग्रादेवाऽस्माद्राष्ट्रात्तस्य कर्मयोगादर्शो महीयान्, विश्वजनीन आत्मोन्नायकश्च वरीवर्तीत्यहं मन्ये। तद्वरं मत्स्वामिनस्तपोनिष्ठानैरन्तर्यं संरक्षितुं, गृहव्यवस्थां साधारणतया संचालयितुं च मदीयश्रमसाध्यमायकरं च किञ्चित्कार्यमस्ति चेत् मां निर्दिशतु भवती"।

तथा प्रत्युक्ता सा प्रतिवेशिनी लज्जितेव, कण्ठेऽवरुद्धशब्देव चाऽरक्तवदना, वलात् प्रदर्शितस्मिता, सङ्कुचद्दृष्टिश्च सुशीलामवदत्- 'एतत्तु सत्यमेवाऽस्ति यतृ श्रीदाम्नो महतः सिद्धान्तस्य कर्मणश्च कृते सर्वे तं भूयोभूयः प्रशंसन्ति, यद्यपि तत्कर्मणो वैशिष्ट्यं महत्वं च याथार्थ्येन वयं न विद्मः किञ्च- यथा त्वं कथयन्त्यसि, तथा त्वदीयश्रमसाध्यम् किं कार्यं संभवेत्, अहं चिन्तयामि, अन्यांश्च पृच्छामि'



करूषदेशे 'बन्धुः' इत्युपनाम्ना प्रसिद्धः कश्चन धर्मात्मा बणिगासीत् । स ग्रीष्मर्तौ श्रान्ताः पथिका घर्मतापापनोदनायच्छायाशीतले मञ्चके विश्रांम्यान्त्विति नीलकण्ठग्रामस्य चतुष्पथ एकं विशालं मञ्चकं निर्माय, तत्र वटाश्वत्थवृक्षकौ अरोपयत् विज्ञपण्डितद्वारा सविधि तयोः प्राणप्रतिष्ठां विवाहं चाऽकारयत् तस्मिन्समारोहेऽसंख्यान् ग्रामजनान् निमन्त्र्याऽभोजयच्च ।

समारोहकार्यक्रमेषु धार्मिकप्रवचनकार्यक्रमोऽप्येकतम आसीत् । तेन प्रवचनानि, श्रोतुकामास्तत्र नरा नार्यश्च समौनावलम्बं सधैर्यावष्टम्भं समुपविष्टा आसन् । सभापतित्वाय श्रीदामानं वृतवन्तश्च त ऐकमत्येन सभां सञ्चालयितुम् । ततः प्रवचनकार्यक्रमस्य प्रारम्भोऽपि समजायत । सर्वप्रथमम् तस्यैव ग्रामस्य प्रतिष्ठितो विद्वान् रमानाथः 'झा' प्रावोचत् । तत्प्रवचनस्य सारांश एवमासीत्-

"बन्धुमहोदयो यदेतत्पुण्यकार्यम् कृतवान्, तेन बहूनां जनानामुपकारः, तस्य महती कीर्तिश्च युगपदेव भविष्यतः । 'सरन' ग्रामात् "बिनिया' ग्रामपर्यन्तं मध्येमार्गं नैकमपि विश्रामस्थानमासीत् । निदाघे, मध्याह्ने कार्यवशात्तेन पथा गच्छन्तः पथिका घर्मपीडया मुमूर्षन्त इव भवन्ति स्म । कियद्वा करवाणि प्रशंसामस्य पुण्यकर्मणः, सेवाकार्यस्य वा । सबंहिष्ठविस्तारम् कृताप्येतत्प्रशंसाऽपर्याप्तैव भवति । भगवानस्यैवं समाजसेविनो बन्धुमहोदयस्य सर्वाङ्गीणं कल्याणं 'विदधताम्' ।

ततस्त्रिचतुरान् शब्दान् मञ्चतो वक्तुं सभापतिं संप्रार्थ्य बन्धुमहोदयः प्रावोचत्- 'संमान्याः सभापतिमहोदयास्तथाऽन्ये समुपस्थिताःप्रियसुहृदः । इदानीमत्र ये ये संमान्या विद्वांसः प्रवक्ष्यन्ति, तान् सर्वान् प्रणम्य सविनयमहमनुरुणध्मि- "ते ममैतस्याऽगणनीयस्य लधुनः कार्यस्य कृते मां न प्रशंसन्तु । भवतां प्रशंसां लभेय, कीर्तिर्भविष्यतीत्याशया नैतन्मया कार्यम् कृतम् । ईदृशो लधुकार्यस्य कृते या मत्प्रशंसा भवन्त्यस्ति, तया लज्जितोऽहं कथमत्र क्षणमप्यतिवाहयानीति चिन्तयमानोऽस्मि । स्वल्प एव किं न स्यात् ? जनानामुपकारोऽस्तु, सेवा भवत्विति कामयेऽहम् । तेनैव मे सन्तोषो भवति । नाऽहं स्पृहयाम्यस्य कर्मणः पारितोषिकाय सान्दृष्टिकायोदर्काय वा ऐहिकाय पारलौकिकाय च । आशासे कर्मविवेचनचुञ्चवोऽत्र भवन्तो ममैतं हार्दिकमनुरोधं स्वीकरिष्यन्तीति । क्षमायाच्ञापूर्वकमेतावदेवोक्त्वाऽहं विरमामि ।"

ततः प्रवचनायाऽन्यग्रामस्य कस्यचन शिक्षकस्य "धर्मराज अप्पयस्य' वारः समायातः । स्वप्रवचनक्रमे स एवमवोचत्- 'श्रीमतो बन्धुमहोदयस्याऽनुरोधे स्वीक्रियमाणेऽपि स्वस्य कृतघ्नत्वदोषस्य निरासायाऽन्तरात्मन उद्गारो रोद्धुं न शक्यते स्तुत्यस्य कर्मणः प्रशंसा भवत्येव । सैषा प्रशंसा यशस्काम्यतोऽन्यानपि जनान् प्रलोभ्येदृशे पुण्यकर्मणि प्रवर्तयेदित्याशयाऽप्यस्य सुकृतस्य प्रशंसा कर्तव्यैवेत्यस्ति मे मतम् । आस्तां वैतत् ।

किञ्च-समयोचितमन्यत्किञ्चिद् वच्मि-ईदृक्षो ग्रीष्मातपोऽस्ति पुण्यात्मना बन्धुमहोदयेन द्वौ वटाश्वत्थवृक्षकौ मञ्चके रोपितौ । परं यद्येतौ दिनस्य द्विः सायंप्रातर्जलं न प्राप्नुयाताम्, स्वल्पैरेवाऽहोभिरेतौ म्लानौ, शुष्कौ च भवेताम् । वर्षासमयो दूर एवाऽस्ति । तदभ्यन्तरे वृष्टिर्भवेन्न वा ! सत्यामपि वृष्टौ कादाचित्क्याम्, न तयैवैतौ जीवितुं शक्ष्यतः । अत एतयोः सेकप्रबन्धोऽद्यप्रभृत्येव कर्तव्यः ।

तथा च-पश्चात् प्रवक्ष्यतो महाविदुषः सारगर्भाय प्रवचनाय समयः पर्याप्तो भवत्विति हेतोरस्मादृक्षैरकिञ्चिन्मूल्याय प्रवचनाय प्रभूतः समयो न ग्राह्यश्च इति विचार्याऽहमितो विरमामि " ।

तत उद्घोषकः श्री किशोरलाल दुवे महोदयः प्रोवाच- "उपस्थिताः सज्जना अनयोर्वटाश्वत्थवृक्षकयोः सेकस्य कृते पूर्ववक्त्रा महाशयेन यत्कथितं तत् सामयिकं समीचीनं चाऽस्ति । तदर्थं तत्र भवान् धन्यवादार्होऽस्ति । परं तयोः सेकस्य कृते रोपणदिवसत एव बन्धुमहोदयेन मासिकपारिश्रमिकप्रबन्धपुरःसरम् एको जनो नियुक्तचरोऽस्ति । तस्यैव हस्तत एतौ वृक्षकौ प्रतिदिनं यथासमयं यथार्हम् च सेकं प्राप्नुवन्तौ स्तः । अन्यत् पुण्यात्मना तेनैव बन्धुमहोदयेन मञ्चकनिकटे एकस्य कूपस्य खननायाऽपि प्रबन्धो विहितोऽस्ति । पूर्वनिर्धारितकार्यक्रमानुसारं श्वः प्रभृत्येव तत्कृते खननादिकार्यप्रारम्भो भविता । तदेनयोः सेकस्य कृते नैव केनाऽपि लेशतोऽपि चिन्ता कार्या ।

किञ्च-प्रियबन्धवः । अधाऽत्र दूरदूरत आमन्त्रिता जना अभ्यागताः । एभिः सर्वैःपुनः सायं स्वगृहे प्राप्तव्यमेवाऽस्ति । तत्कार्यक्रमो नैव विस्तारणीय इति विचार्य द्वित्राणां प्रवक्तॄणाम् प्रवचनानि क्षमायाच्ञापूर्वकम् स्थगयित्वा तं सभापति महोदयम् मार्मिकप्रवचनाय, तत्पश्चात् सभाविसर्जनाय चाऽनुरुन्धन्नस्मि । यस्य प्रवचनं श्रोतुम् समुत्सुका जना दूरदूरादागत्य प्रतीक्षमाणाः सन्ति । सावधाना भवत । परार्थनिष्ठया, भगवद्भक्त्या,

विविधसुकृतोपार्जितेन व्यक्तित्वेन च सुविख्यात:, प्रत्यक्षमदृष्टेऽपि प्रथितेन शुभनाम्नैव सर्वेषां सुपरिचितश्च श्रीश्रीदाममहोदय: सभापतेरासनत: प्रवचन्नस्ति श्रुत्वा ज्ञानं समर्जयन्तु भवन्त: ।

तच्छ्रवणानन्तरमेव सर्वे समुपस्थिता जना: करतलध्वनिभिरुद्घोषकविचारम् असमर्थयन् ।

तत आसनादुत्थाय श्रीदामा प्रवक्तुमारेभे-

ॐ पूर्णमद: पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।

पूर्णस्य पूर्णमादाय पूर्णमेवाऽव शिष्यते ॥

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्य: शूर इषव्योतिव्याधी महारथो॰जायतान्दोग्ध्री धेनुर्वोढानड्वानाशु: सप्ति: पुरन्धिर्योषा जिष्णू रथेष्ठा सभेयो युवास्य॰यजमानस्य वीरो जायतां निकामे निकामे न: पर्जन्यो वर्षतु फलवत्यो न ओषधय: पच्यन्तां योगक्षेमोन: कल्पताम् ।

सर्वे भवन्तु सुखिन: सर्वे सन्तु निरामया: ।

सर्वे भद्राणि पश्यन्तु मा कश्चिद् दु:खभाग्जन: ॥

मम प्रिया भ्रातरो भगिन्यश्च ।

"पुनरपि जननम्, पुनरपि मरणम्' एवं निरन्तरदु:खकष्टपारावारे निमज्जनोन्मज्जने एव हि संसारो नाम । अतो मुक्तिलाभं सर्वेषां पुरूषार्थानां श्रेयांसं मन्यन्ते विचक्षणा: । यतो जना आध्यात्मिकात्, आधिदैविकात्, आधिभौतिकाच्च दु:खनिचयात् शाश्वतीं मुक्तिं लभन्ते । मुक्तये च साधकै: भक्तियोग-ज्ञानयोग-कर्मयोगानामेकतम आश्रयणीयो भवति । एते त्रय एव योगा: साधकेभ्यो मुक्तिदानाय समर्था: सन्ति । परं लोकस्य भिन्नरूचित्वात् साधकास्तेष्वेकं स्वरुच्यनुकूलं वृण्वन्ति । मह्यमपि तेषु विशेषेण कर्मयोगो रोचते । तेन प्रायोऽहम् कर्मयोगमेव मनसिकृत्य जिज्ञासूनुपदिशामि । परमतिसूक्ष्मोऽयं विषय: कर्मयोगस्य । एवं साधारणजनानां हृदये संस्काररूपेण कथमङ्कनीय इति सततं मे भवति स्म चिन्ताया विषय: परमद्याऽहं निश्चिन्ततया नितराम् सहर्षोऽस्मि । यतोऽद्य जटिलोऽपि स विषय: सर्वसुबोधो भवन्नस्ति । यतो भवतामेव पुर: स कर्मयोगादर्शो मूर्त इवोपस्थितोऽस्ति । तस्य परिचायनमेव मे कार्यमस्ति । परिचायिते च तं भवन्त: स्वयमेव साक्षात्कर्तुं शक्ष्यन्ति । पश्यन्तु भवन्तोऽग्रेवर्तमानमेतं नवनिर्मितं मञ्चकम् द्वाभ्यां वटपिप्पलवृक्षकाभ्यां विराजितम् । एष ह्यस्मान् विवर्णयन्, बोधयंश्च वरीवर्ति । तं महान्तं विश्वजनीनम् कर्मयोगादर्शम्

किञ्च- न केवलमेष मञ्चक:, अपि त्वेतौ वटपिप्पलवृक्षकावप्यद्यप्रभृत्येव विशुद्धसेवाकर्मणा कर्मयोगभावनां साकारयन्तौ

स्तः । अनयोर्निष्कामा परार्था शीतलच्छायैव कर्मयोगस्य स्पष्टं निःशब्दा व्याख्याऽस्ति । एतौ वृक्षकौ मानापमानयोः समौ स्तः । द्वन्द्वातीतौ घर्मं, शैत्यं, वर्षाश्च सर्वानेव समौनं सधैर्यमनवरतं सहतः यदैतौ कालेन वर्धिष्येते, रात्रौ पर :शतानां निराश्रयाणां पक्षिणामाश्रयस्थाने भविष्यतः, दिवा परःशतानां घर्मार्तानां श्रान्तानां पथिकानां विश्रामस्थाने च । किं बहुना, केनचिद् दुष्टेनैतयोरङ्गविच्छेदेऽपि सुखदुःखयोः समत्वात् नैतो विरोत्स्यतः । नचैतौ जातुचनोदात्तानामपि स्वकर्मणां प्रतिफलं कामयिष्येते । न वा स्तुत्यमपि स्वं सेवाकार्यमेतौ प्रशंसिष्यतः । न वा तेन गर्विष्यतः । केन प्राक्तनेन दुष्कृतेनैवं स्थावरतां प्राप्तावेतौ वटपिप्पलावनेन कर्मयोगादर्शपालनेन नूनमन्त एवं विपज्जालजटिलं दुस्तरमपि भववारिधिमञ्जसैव तरेतामिति विश्वसिम्यहम् ।

किञ्च- यदब्रवीत् बन्धुमहोदयः काऽस्य लघुनः कार्यस्य प्रशंसेति, नैतत् । कार्ये त्वस्ति मूल्याङ्कनम् भावनायाः, न तु परिमाणस्य लघुत्वबृहत्त्वयोः। कार्यगौरवविवेके, राजा विशालं राज्यं साम्राज्यं वा सञ्चालयति, रजकस्तु कतिपयानामेव जनानाम् वसनानि धावति । शत्रुपराभवाशङ्कया राज्ञश्चिन्ताऽस्ति सैन्यसंघटनस्य कृशत्वे, रजकस्य चिन्ताऽस्ति भारवहन- विघ्नाशङ्कया गर्दभस्य कृशत्वे । आपाततो दृष्टे क्व राजा, क्व रजकः । एकश्चिन्तयति साम्राज्यम्, अपरः स्वं परिवारम् । चिन्ता तु राजरजकयोः समैवाऽस्ति । परम् कार्यम् यावत्परिमाणकं भवतु राज्ञो रजकस्य वा, नैतद् विचार्यते । सैव विचार्यते कार्यप्रेरिका भावना कीदृश्यस्ति । यदि राजा स्वार्थान्धः प्रजाहितनिरपेक्षः शक्तिप्रयोगेण प्रजामवस्कन्द्य राज्यं करोति, तद्विपरीतं स रजकस्तु कर्तव्यधिया, सेवाभावेन, प्राणयात्रार्थमेव केवलं नाममात्रकं पारिश्रमिकं गृह्णानः परेषां वस्त्रधावनं करोति, तर्हि राजा सकामेन स्वकर्मणा बद्धोऽन्ते नरकस्याऽधिकारी भवति, रजकस्त्वनासक्तेन स्वकर्मणा बन्धनमुक्तोऽन्ते मोक्षाधिकारी भवति । ईश्वरीये धर्माधिकरणे राजत्वेनाऽयं राजा संमान्यः, रजकत्वेनाऽयं रजकोऽवमान्य एवंरूपो व्यवहारो न भवति । तत्र केवलं भावनयैव कर्मकर्तृणामधरोत्तरभावो भवति

मम प्रिया भ्रातरो भगिन्यश्च ।

मन्ये परःसहस्रैः शब्दैः कर्मयोगं व्याचक्षणोऽप्यहं षोडशभागेष्वेकं भागमपि नो व्याख्यातुमशक्नवम् । परं समौनं स्थितोऽप्येष सवटपिप्पलो मञ्चकः स्पष्टतया समग्रं कर्मयोगं विवृण्वन्नस्ति चिरं विवरिष्यति च । अस्मादस्माभिः कर्मयोगतत्त्वं शिक्षणीयम्- "कर्मयोगः स्थितप्रज्ञदर्शनेनाऽनासक्तकर्मणा च साध्यते, नो प्रवचनेन गल्पप्रायेण" । अयं मञ्चकोऽपि जडः, एतौ वटपिप्पलवृक्षकावपि जडाविति नैव भवद्भिर्भावनीयम् ।

यतोऽस्माकं धारणायामेष मञ्चको न केवलं विश्रामस्थानमस्ति, कर्मयोगप्रशिक्षक आश्रमोऽप्यस्ति, यत्र वटपिप्पलामिधेयौ द्वौ समौनौ शिक्षकौ स्तः। एतत्सङ्गादत्रत्यं विशुद्धवातावरणमपि दिवानिशं कर्मयोगमेव व्याचक्षाणं भवति। अलं बहुना।

मम प्रिया भ्रातरो भगिन्यश्च।

अन्यदपि किञ्चिन्मम वक्तव्यमासीत्, परमयं पीतपीतो घर्मो भगवतो विवस्वतोऽस्तमयनवेलां सूचयन्नस्ति। भवतामपि दूरे क्व क्व प्राप्तव्यं भवेत्। समयोऽतिवर्तते। तदद्य सोमवासरोऽस्ति। आगामिनि शुक्रवासरे वराहग्रामे सत्सङ्गसभा भविष्यन्त्यस्ति। तत्रैवाऽहमवशिष्टं स्वमन्तव्यं श्रद्धालुभ्यो भवद्भ्यो दास्यामि। श्रोतुकामैस्तत्र समागन्तव्यम्।

अन्ते मम हृदयं ब्रवीति- "अस्माकं प्रियेण बन्धुमहोदयेनैतत् पुण्यकार्यम् न ख्यातिलोभेन, न च कस्यचिदाग्रहेण कस्यचित्पदस्य प्रतिष्ठायाश्च संरक्षणभावेन, एतत्कार्यव्यपदेशेन कस्यचित्स्वार्थसाधनस्याऽभिप्रायेण वा कृतम् अपि तु केवलं विशुद्धेन निष्कामेन, आसक्तिहीनेन सेवाभावेन कृतम् इति तस्मै बन्धुमहोदयायाऽहं हार्दिकान् धन्यवादान् समर्पयामि। ततोऽविगणय्य स्वं गृहकार्यजातम्, अमूल्यं स्वं समयं चाऽत्रोपस्थाय सधैर्यम् समौनम् मत्प्रवचनं शृण्वद्भ्यो भवद्भ्यश्च सहस्रशो धन्यवादान् समर्पयामि, एतां सभां च विसर्जयामि।

स्वस्ति प्रजाभ्यः परिपालयन्ताम्<br>
न्याय्येन मार्गेण महीं महीशाः।<br>
गोब्राह्मणेभ्यः शुभमस्तु नित्यम्<br>
लोकाःसमस्ताः सुखिनो भवन्तु॥<br>
काले वर्षतु पर्जन्यः पृथिवी शस्यशालिनी।<br>
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः॥<br>
अपुत्राःपुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः।<br>
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम्॥<br>
कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात्।<br>
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पये तत्॥<br>
ॐ नमः शिवाय।



अद्य शुक्रवासरे, वराहग्रामे सत्सङ्गसभा भवन्त्यस्ति । तत्र द्वित्राणां विदुषाम्, प्रमुखतया सतः श्रीदाममहोदयस्य प्रवचनस्य कार्यक्रमः पूर्वमेव निर्धारित आसीत् । परं गतबुधवासरे एव सर्वकारः श्रीदामानं बन्दीकृतवान् । एतं नवमुदन्तं स्वल्पे एव जनाः श्रुतवन्तः तेनाऽसंख्या जनाः सतः श्रीदाममहोदयस्य प्रवचनं श्रोतुं दूरदूरत आगत्य तत्रोपस्थिता आसन् । प्रवचनमञ्चश्च सज्ज आसीत् । सर्वे श्रीदामानं प्रतीक्षमाणा आसन् । तस्मिन्नेवाऽवसरे उद्घोषको मित्रराजदुवे महोदयो मञ्चमारुह्य, उपस्थितं जनसमूहं सम्बोध्य सन्दिशन् प्रोवाच- "दुःखस्याऽस्त्ययं विषयो यद् दूरदूरतः समागत्य सतः श्रीदाममहोदयस्य प्रवचनं श्रोतुं भवन्तः एवं तं प्रतीक्षमाणाः सन्ति । परम् गत बुधवासर एव सर्वकारस्तं प्रगृह्य बन्दीकृतवान् । साम्प्रतम् श्रीदाममहोदयः केन्द्रीयकारागारे बन्दीभूतोऽस्ति । नचैतदपिवक्तुं शक्यते कदा स मोक्ष्यते इति । तथात्वेऽपि पूर्वनिर्धारितकार्यक्रमस्य सञ्चालनमितोऽत्र भविष्यत्येव । कर्मयोगज्ञानयोगयोस्तुलनात्मकं विवेचनमद्यतनस्य प्रवचनकार्यक्रमस्य विषयोऽस्ति ।"

एवमुद्घोष्योद्घोषकमहोदयो यदा सभासञ्चालनतत्परो भवन्नेवाऽसीत्, तदैव श्रीदामप्रवचनाकर्णनायोपस्थिताः प्रायः सर्वे जना उत्थाय समौनम् यथागतं निवर्तितुमुपचक्रमिरे । तत्र तु कतिपये विद्वत्स्तरीया अङ्गुलीपरिगणनीया एव जना अवशिष्टाः "। " ततस्ते संभूय कार्यक्रमप्रबन्धतत्परमुद्घोषकमहोदयमेवमन्वरुन्धन्- "यत्र श्रोतार एव न सन्ति तत्र कोऽर्थो वृथा प्रवचनकार्यक्रमविस्तारेण ? तद् यदैव सन् श्रीदाममहोदयो मोक्ष्यते, तदैव पुनरसौ प्रवचनकार्यक्रमः सञ्चालयिष्यत इति अनिश्चितकालस्य कृते कार्यक्रममेतं स्थगयन्तु भवन्त इति" ।

तेषां सामयिकः सोऽनुरोधः सर्वसम्मत्या स्वीकृतः, तदनुसारिणा निर्णयेन कार्यक्रमश्च स्थगितः । तदनन्तरं तत्राऽवशिष्टानां विज्ञपर्यवेक्षकाणां मिथ एवमभूवन् संलापाः ।

तेष्वेकः प्रोवाच- 'सन्तं श्रीदामानं सर्वकारः किमर्थं संयमितवान् ?"

अन्यः प्रत्युवाच- "एतद्विषये कर्णाकर्णिकयाऽऽकर्ण्यते-सन् श्रीदाममहोदयः स्वप्रवचनक्रमे राज्ञि रजके च समभावमभिव्यज्य राजानमवामन्यत । एकस्यामेव पङ्क्तौ तौ निवेश्याऽलोचयत् । स्वकर्मणा

भविष्ये राज्ञो नरकाधिकारित्वम्, रजकस्य स्वर्गाधिकारित्वं च व्याचक्षाणः स राजानं भृशमेवाऽवामूल्ययच्चेति तस्मिन्दोषारोपोऽस्ति' इति ।

अन्य-'कोऽस्ति हेतुर्वस्तुतस्तु न ज्ञायते । परं राज्यसिंहासनम् सन्तं श्रीदामानं नैव स्तोकमपि सहते, क्रियासमभिहारेण तं प्रगृह्णाति वन्दीकरोति, क्लिंश्नाति, आतङ्कयति च' ।

अपरः- 'स हेतुरपि विदितचरप्राय एवाऽस्ति । संभवेदेष एव हेर्तुर्भवेत्-यतोऽनन्यसमर्थकः सखा चाऽस्माकं श्रीदाममहोदयो वासुदेवस्य कृष्णस्य । कृष्णस्य नाममात्रे क्वचित्प्रसङ्गागते तं स्मृत्वा, स्तुत्वा, प्रशस्य, वर्णयित्वा च नैव श्रीदाममहोदयस्तृप्यति, विरमति च । अन्यतः कृष्णस्य करूषदेशराजसिंहासनस्य च वैरम् सदातनमिवाऽस्ति । तेनैव पुरा करूषाधिपंपतिः पौण्ड्रको हतः। तदनु दन्तवक्त्रोऽपि हतः अधुनातना उत्तराधिकारिणश्चाऽशक्त्या विनताः, वशंवदाश्च कामं वाह्यतः कृष्णं प्रशंसन्तु, स्तुवन्तु परं स्वगतं तु ते तमन्तःकरणतः स्वप्रतिपक्षमेव भावयेयुस्तदनन्यमित्रं श्रीदामानं च ।"

प्रथमः- यद्यस्ति कृष्णेन सह तादृशं सख्यम् श्रीदाम्नः, तर्हि किमर्थम् कृष्ण एतस्मै किञ्चिदर्थसाहाय्यं न ददाति ? यतः श्रीदाम्नो गृहस्थितिस्तथा शोचनीयाऽस्ति । नाऽयमपि कृष्णेन जातुचन मिलति । यद्यनयोः सङ्गमोऽभविष्यत्, तर्हि तदुदन्तोऽस्माकं कर्णपथे समागमिष्यत् ।"

द्वितीयः- "विचित्राऽस्ति वार्ता । दन्तवक्त्रोज्जासनानन्तरम् अस्माभिः श्रीदाम्ने सामयिको हितावहश्च परामर्शः प्रदत्तः- "गच्छ, स्वदेशमागतम् तथा शक्तिशालिनम् स्वं सखायं श्रीकृष्णं द्रष्टुम्, न गच्छसि ? राजधान्यां विजयोत्सवोऽस्ति । अपरिचिता अपि एतद्देशीया गण्यमान्यजनाः कृष्णं गत्वाऽभिनन्दन्तः सन्ति । अस्मिन् देशे, राजधान्याम्, दर्शनार्थमभिनन्दनार्थं चोपस्थितेष्वन्येषु जनेषु त्वां चिरमित्रमदृष्ट्वा कृष्णस्त्वां प्रति किं भावयेत ? गच्छ, यथाशीघ्रम् । सांप्रतं स्वर्णावसरोऽप्यस्ति तव स्वगृहस्थितिप्रदर्शनाय । स नोपेक्षणीयस्त्वयेति' ।

तदाऽस्मान् स एवं प्रत्यवोचत्-'प्रथमं तावदेतदहं न जाने- 'सांप्रतिके युद्धकोलाहले मम तेन समागमः कियद्दौचित्यमावहेदिति । सत्यपि तस्मिन्नौचित्य आवयोः सांप्रतं समागमावरोधकमपरमप्येकं कारणमस्ति -- मम पुरश्चरणानुष्ठानम् । साम्प्रतमहमेकं पुरश्चरणमनुतिष्ठन्नस्मि असमाप्यैतन्मध्ये नाऽहं क्वचिद्गन्तु शक्नोमि प्रत्यवायभिया । तदेतेन कारणद्वयेन सांप्रतं मम तेन सङ्गमो नैव भविता । स्वस्याऽनन्यमित्रेण तेन सञ्जिगमिषा त्वस्त्येव बलवती मम हृदये तेन पञ्चषैर्मासैरहमेव द्वारकायां गन्तास्मि । तत्सविधे प्राप्य

तां स्वामाकाङ्क्षां तदैव पूरयिष्ये । गृहसम्बन्धिनी भौतिकी स्थितिस्तु स्वस्यैव प्रारब्धकर्मानुसारिणी भवति । स्वयं कृष्णस्याऽपि वाल्यं पित्रोरुत्सङ्गतो दूरे प्राप्य परगृहे निलीय यापनीयं जातमासीत् ।

गृहस्याऽर्थसम्बन्धिनि विषये स्वस्यैव विचारमभिव्यनजानि- 'समावृत्य, गृहप्रवेशानन्तरम् स्वस्यैवात्मानमहमपृच्छम्- "कमुपासै ईश्वरमथवाऽर्थम् ? इति, । मम विशुद्ध आत्मा मां प्रत्यवोचत्– "ईश्वरमुपास्स्व' इति । तदेकस्येश्वरस्याऽहमुपासकस्तं प्रवञ्च्य पुन: कथमन्यमर्थमुपासै ? । अपरं च- यथा भवन्तो ब्रुवन्ति, न तथाऽहमर्थकाम्यया स्वगृहस्थितिं तं प्रदर्शयितुं शक्नोमि । यत: क्रान्तदर्शी स मनुष्याणां जीवनस्य, कर्मणां च मूल्यं जानाति । गृहपरिस्थितिं प्रदर्श्य यावदहं तदग्रत: संपदो लिप्सामभिव्यनज्मि, तावत्स मामेवं प्रक्ष्यति- 'सत्यमेतत्सखे । मयि स्थिते न त्वयैवभैश्वर्यहीनेन भाव्यम् । परं त्वमेव वृणुष्व- "कतरदैश्वर्यं तेऽहं दद्याम् ? भौतिकं किं वाऽऽध्यात्मिकम् ? यदि भौतिकमैश्वर्यं कामयसे, तर्हि तस्य परिणतिरेवं भविष्यति-

(१) तस्यैश्वर्यस्य सदा त्वया प्रतिरक्षित्वेन स्थेयमवधेयं च भविष्यति । तदर्थे त्वया रात्रिरपि चिन्तासन्तानविनिद्रेण, मानसक्लेशप्लुष्टेनाऽतिवाह्या भविष्यति ।

(२) तव दारा: पुत्रादयश्च तवैश्वर्ये स्वीयमेकाधिकारं चिकीर्षिष्यन्ते । तवाऽहर्निशं तेभ्योऽपि विभेतव्यं भविष्यति ।

(३) तेनैव धनेनैकाकी त्वं क्वचिद्गन्तुमपि न शक्ष्यसि । यत एकाकिनं त्वामाक्रम्य तव बहुमूल्यानि वस्त्राभरणानि हर्तुं दस्यवस्त्वामनुयास्यन्ति विविक्तं स्थानं समयं च प्रतीक्षिष्यन्ते तवोज्जासयितुम् ।

(४) तदैश्वर्यसंरक्षणायैवाऽहर्निशं चिन्तयमानस्य, चेष्टमानस्य, व्याप्रियमाणस्य च ते निरवकाशं तया सार्वजनिकसेवाक्षेत्रम् सदाऽपरिचितमेव भविष्यति । तेन सार्वजनिकसेवाव्रतिन: सुकृतात्मानस्त्वां यक्षवित्तं केवलादिनं वृथा भूभारायितं च मन्यमाना अन्तर्घृणादृशा विलोकयिष्यन्ते । नैकमपि विश्वस्मिन् तव मित्रं नाम भविष्यति ।

(५) तव देहान्ते सति त्वत्सञ्चितमैश्वर्यं विभाज्य जिघृक्षन्तस्तव भार्यापुत्रादयो बहि: शोकमुद्रा: विरचयन्तोऽप्यन्त: प्रहर्षिष्यन्ति । अन्ततो गत्वा बलवता केनचिदसमभागतया विभाजितं तदेव त्वदर्जितं धनम् तव परिवारजनानां मिथ: कलहस्य दुरन्तस्य वीजं च भविष्यति ।

(६) अन्ते त्वमेकाकी रिक्तमुष्टि: स्वेनैव प्रियेण शरीरेणाऽपि त्यक्तसम्बन्ध: स्वकर्मफलभोगाय यमदूतै: पाशेन गले बद्ध्वाऽऽकृष्यमाण: क्लेशातिशयेन मुहुर्मुहु: सित्कुर्वन्, रुदन्, क्रन्दन् परलोकमार्गपथिको भविष्यसि ।

यदि चाऽध्यात्मिकमैश्वर्यं कामयसे, तर्हि तत्परिणतिरेवं भविष्यति-

त्यागः, निष्कामा लोकसेवा, सर्वेषु स्वात्मभावः, सर्वत्र समभावं द्वन्द्वसहता चेत्यादिभिः कर्मयोगानुशासनैः पूर्णतया साधिता स्थितप्रज्ञतैव हि आध्यात्मिकमैश्वर्य नाम । हस्तगतेनाऽनेन त्वं न केवलं मनुष्यसंख्यामतिवर्तितुमपि तु समग्रं विश्वमेव प्रभावयितुं शक्ष्यसि । अष्टौ सिद्धयस्त्वां दासीवदनुगमिष्यन्ति । त्वदात्मभावेन प्रभावितः सर्वोऽपि विश्वजनस्त्वामात्मीयिष्यते । अस्य विश्वस्यैकत्रीकृता नश्वराः समग्रा अपि वैभवैश्वर्यश्रियोऽनश्वरस्य तवाऽध्यात्मिकैश्वर्यस्य नैकां कलामप्यर्हिष्यन्ति । तेन ता भौतिकीः सम्पदस्तृणाय मन्यमान आजीवनं शिलोञ्छवृत्त्या वर्तयमानः, भूतमात्रम् ईशभावेन सेवमानः, अन्ते प्राणादीनि सूक्ष्मतत्त्वानि तत्तद्देवतासु विलाययन्, ईश्वरचिन्तनेनाऽखिलान् सङ्कल्पान् उच्छिन्दन्, आत्मानं परमात्मना मेलयन् परां शान्तिं निर्वेक्ष्यसि । तद्वद सखे ! द्वयोरेतयोरैश्वर्ययोस्त्वं कतरद् वृणुषे ? इति " ।

एवं पृच्छति कृष्णे कतरदैश्वर्यं वरणीयं मया ? तन्मम गृहस्थितिसुधाराय यथा भवन्तोऽभिप्रयन्ति, तथाऽभिव्यक्तुं नाऽर्हाम्यहं तत्समक्षम् इति ।"

एवं वाग्जालपरम्परां स तितांसत्येव, कलापूर्णाभिर्भङ्गीभिरन्यानवाचो विधित्सत्येव । न च स्वां गृहस्थितिमनुलोमयितुं वस्तुतः स स्वयमेव कामयते ।

तृतीयः- 'स तु कारागारतः कदा निर्गच्छेत्, न ज्ञायते । तेन सत्सङ्गसभाप्रवचनस्य कार्यक्रमेण सावधिकेनैव भाव्यम्' ।

द्वितीयः- 'साधु साधु । स कदा निर्गच्छेत्, न ज्ञायते । यतो जातुचन तेन कारायां सहाध्युषिताः, पश्चात् कारामुक्ता जनाः श्रीदाम्नो विषये व्याकुर्वन्ति- "तस्य कृते स्वगृहकारागृहयोर्नास्त्यन्तरम् । संयतोऽस्मीति नैव लेशतोऽपि स क्लेशमनुभवति । कदा कारायां प्रविश्यैकान्ते निर्बाधं भजनम्, कीर्तनम्, जपम्, ध्यानं च कर्तुं लभेयेति सदा कामयमान इव प्रहृष्टः स कारायाम् अहर्निशं स्वनिष्ठापरो भवति । यावज्जीवं कारायां बन्दीकृतेऽपि तस्मिन्, नैव स विरोत्स्यति । जातु भजनम्, जातु कीर्तनम्, जातु जपः, जातु च ध्यानमिति क्वाऽस्ति विरोधावकाशस्तस्य ? बन्दितामेव कश्चिद्यदि साधनावसरं स्मरेत् तत्र को विरोधः का मुमुक्षा ?

नियमतः शनिवासरे आध्यात्मिकं, धार्मिकं प्रवचनं भवति तस्य कारायाम् । सर्वे बन्दिनस्तस्याऽकर्षकं ज्ञानप्रदं च प्रवचनं श्रोतुमनसः सदा तत्र शनिवासरमुत्कण्ठया प्रतीक्षमाणा भवन्ति ।

किञ्च- कारातोऽयं निर्जिगमिषेत्, तदर्थे प्रयस्येत् । एतत्तु संभाव्यमेव नाऽसीत् । तेनैकदा काराध्यक्ष: स्वयं तमुपेत्य प्रोवाच- 'श्रीदाममहोदय ! उदन्तोऽस्ति, भवद्गृहे पुत्रोऽतीव रुजार्तोऽस्ति । तद् यदि भवान् क्षमां याचते, तर्ह्यहमधुनैव भवन्तं कारातो मोक्ष्यामीति' । तदाकर्ण्य श्रीदामा विहस्य प्रत्यवोचत्- "महानुभाव ! किमर्थं भवान् विहन्ति ममैकाग्राम् निष्ठाम् ? गृहात् कारायाम्, कारातो गृहम् इति कारयित्वा ? गृहे स्वनिष्ठया वसन्तं माम् भवन्तोऽत्राऽनीतवन्त: मम कृते किं तद् गृहम्, किमेतत् कारागृहम् ! द्वयमेव सममेवाऽस्ति । यतो गृहं नाम पक्षिणां नीडमिवाऽस्माकं निवासस्थानम् यावज्जीव्यते । तन्निवासस्थानं काममेतदेव भवतु वा तदेव भवतु, किमन्तरं भवेत्तेन मत्कृते एतदेव गृहायितमस्ति कारागृहम मम । कोऽर्थो वृथा क्षमायाचनपूर्वकेण मम निर्गमेण ? पुरा राजा दन्तवक्त्र: (स्वराज्यकाले) पञ्चषान् वारान् मां वन्दीकृतवान् । तदाऽपि नाहं जातुचित् क्षमायाचनमकरवम् कारातो निर्गमाय । आशासे भगवान् मम बालं पुत्रमुल्लाघयिष्यति । कारातो निर्गमाय तस्य कृते नैव कस्यचित्पुरत: क्षमाप्रार्थीभूय स्वात्मा मयाऽवनमयितव्य, इति' अतोऽहं ब्रवीमि- कारात: कदाऽसौ मोक्ष्यते, न ज्ञायत इति ।



वराहग्रामे सत्सङ्गाश्रमे सत्सङ्गसभाया आयोजनाऽऽसीत् । बहवो विद्वांसः, साधवस्तथा परःशताः साधारण जनाश्चोपस्थिता आसन् । तत्र विशेषतः श्रीदाम्न उपस्थितिः सर्वसन्तोषाधायिन्यासीत् । यतः सर्वसंमत ऋषिवत्प्रतीक्ष्यः श्रद्धेयश्च महानात्माऽऽसीत् । सभायाः कार्यक्रमसञ्चालनात् प्राक् श्रीदाम्नः कैश्चित् सभ्यैः सहैवमभूवन् संलापाः-

श्रीरामशर्मा द्विवेदी- "कियन्तं समयं यावद् बन्दीकृतो भवान् ?"

श्रीदामा- "एकं वर्षं यावत्'

पुष्पदन्तः. अग्रवालः- "अहो कियदत्याचरितमनेन कुशासनेन निर्दोषं सन्तमेवं बन्दीकृत्य ? को दोषः प्रकाशितो भवतः सर्वकारेण ?

श्रीदामा- "मम प्रवचनम् राजरजकौ एकस्यामेव पङ्क्तौ न्यवेशयत्, रजकं संमान्य राजानमवामन्यत चेति द्वौ दोषौ मम दर्शितौ सर्वकारेण"।

पुष्पदन्तः- "तावतैव लघुना मिषेण एकवर्षं यावत् कारावासकष्टम् दापितं भवते ?"

विहसन् श्रीदामा -"आम्, कारावासो दापितः ।"

पुष्पदन्तः- "कष्टं न दापितम् ?"

श्रीदामा- "न कष्टानुभूतिर्भवति मम कारायाम् "

पुष्पदन्तः- "कुतः ?"

श्रीदामा- ""पवित्रा बहुगुणा च साधनाभूमिः खलु काराऽस्मादृक्षाणाम् साधकानाम् । एकान्ते भगवद्भजनाय, कस्यचित्तत्त्वस्य सूक्ष्मचिन्तनाय, आत्मानुशासनस्य संयमस्य चाऽभ्यासाय च यथा कारागृहमनुकूलवातावरणं भवति न तथा गृहम् विषमप्रपञ्चाकुलम् । किञ्च तत्र विविधैः कदाचरितैः प्रविष्टानां बहूनां बन्दिनाम् हृदयपरिवर्तनस्य, कर्मयोगप्रशिक्षणस्य च स्वर्णावसरो लभ्यते, यमहं महान्तं सेवाकार्यक्रममेव मन्ये । यतो दृढमहं विश्वसिमि- तथा प्रशिक्षितास्ते बहिर्निर्गम्य निष्कामसमाजसेविनो भविष्यन्तीति"

एवं संलपत्सु तेषु, मञ्चत उद्घोषकमहोदय उच्चैः प्रोचे- "सर्वैरवधेयम् । इतः सभापतेराज्ञयाऽहं मञ्च आगत्य प्रवचनाय सन्तं श्रीदाममहोदयमनुरुन्धन्नस्मि, यस्य ज्ञानप्रदं सारगर्भं च प्रवचनं श्रोतुकामा भवन्तो दूरदूरतः सोत्कण्ठं समागताः सन्ति । ततः श्रीश्रीदाममहोदयो मञ्चमारुह्य प्रवक्तुमारेभे-

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णु रथेष्ठा सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्जनः॥
मम प्रिया भ्रातरो भगिन्यश्च।

एकं वर्षमनु तां प्रतिज्ञामहं पूरयन्नस्मि, यां नीलकण्ठग्रामे मञ्चकनिर्माणप्रसङ्गसमारोहे किमप्यवशिष्टं वक्तव्यमस्यां सत्सङ्गसभायाम् वक्ष्यामीति कृतवानासम्। अत्राऽस्ति स एव प्रसङ्गः। परं यदा यदाऽहं क्वचिदपि जनसमूहे प्राप्नोमि, तदा विनैवाऽकाङ्क्षाम् विनैव संकल्पम्, विनैव प्रसङ्गमपि ममाऽचेतनमनसः स्वतोऽयं श्लोक उद्भवति, कण्ठे समायाति च-

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्जनः॥ इति

मन्येऽचेतनं मन आत्मनः प्रियं कोषागारं भवति। विशुद्धस्याऽत्मनः प्रियाणि भावनारत्नानि तत्र निहितानि भवन्ति। कियत् सहृदयस्य, कियद्वा कारुणिकस्याऽत्मवतः सर्वाभ्युदयकाङ्क्षिणो हार्दिकः प्रार्थनोद्गारोऽयम्। संपूर्णाया एव भुवो मानवानां प्रत्येकमन्तः करणमेवमेवाऽभ्यर्थयते- सुखं लभेय, भद्रं पश्येयम्, निरामयो भवेयमिति"। सार्वभौमामेतामेवाऽकाङ्क्षाम् पूरयितुं कृतः कस्यचन धन्यातिधन्यस्य महामानवस्य महिमातिशयमहित एष उद्गारो न केवलमाकर्णनाय, अपि तु सर्वेषामेव जनानां हृदये प्रतिष्ठापनाय, तत्तात्पर्यस्योन्मेषाय, कार्यान्वयनाय च प्रयोजनीय इत्यहं मन्ये। यदि समाजे सर्वोऽपि जन एवमेव भावयेत, तत् कार्ये परिणमयितुं प्रयतेत च, तर्हि को नाम जनः पृथिव्यामेवमनारतं कृत्रिमे दुःखदारिद्र्यसागरे निमग्नो जायेत। को नाम दूरस्थं देहान्तरलभ्यं स्वर्लोकं वा वृथा कामयेत ? मानवमात्रे आत्मभावं बिभ्रत्, निःस्वार्थो विश्वबन्धुर्जन एवैवं सर्वाभ्युदयाकाङ्क्षां करोति।

मानापमानयोः, दुःखसुखयोः, जयपराजययोश्च समो भूत्वा, फलाकाङ्क्षां विसृज्य, सर्वाभ्युदयकामनया, कर्तव्यधिया कर्म कुर्वन्, कृतं च तत् परात्मने समर्पयन्-जितेन्द्रियः साधकः सत्यम् विश्वस्मिन् राष्ट्रे समाजे च तिलकायत एव। ईदृक्षमेव चारित्र्यं कर्मयोगाभिधेयं नाम। जितेन्द्रियस्य विश्वात्मभावनावतो जनस्य कृते नैतादनुष्ठानमिहाऽस्ति दुष्करम्। सन्ति नो यस्येन्द्रियाणि स्ववशे, तत्कृत एव सर्वं तद् दुष्करं भवति। यः परार्थे कार्यपरायणो भवति, परसुखायैव चेष्टमानो यतमानश्च भवति, नैव जात्वपि

स्वार्थाय चिन्तयते, प्रयस्यति च समदुःखसुखस्य तस्य कृते किं वाऽस्ति दुष्करमिह ? यदि सर्वोऽपि जन एतां चेतनां बिभृयात्, तां च कार्ये परिणमयेत् तर्हि विश्वस्य कस्मिन् वा प्रदेशे दुःखदारिद्र्यसंकटानां भौतिकानामस्तित्वं लभ्येत ?

यदि वयं केचन दुःखिनः, दरिद्राः, सन्तापवन्तश्च स्मः, तर्हि वयं स्वजनसमाजस्याऽसामाजिकताम्, स्वार्थिताम्, परद्रोहितां च विज्ञापयन्तो भवामः । तेनैवाऽस्मान् विलोक्य हृदयेन न कश्चिदपि विश्वसिति- "निष्करुणोऽसौ छिद्रे प्रहरेदिति, "अर्थलुब्धोऽसौ परोक्षे वराटकमपि नैव त्यजतीति,". "मानवताद्रोह्यसौ न कस्याऽपि हितं कामयते इति च" । जनसमाजे दारिद्र्यं, दुःखम्, क्लेशः, सन्तापश्च सर्वेऽप्येते मिथः स्वार्थभावनाया एव, तत्साधकक्रियाकलापस्यैव वा प्रसवा भवन्ति । यदि वयं स्वार्थाय कार्यं कुर्मः, तर्ह्येतत् स्पष्टं भवति- "परदुःखे परक्लेशे च वयं गजनिमीलिकामुपेक्षां वा कुर्मः, परेषां क्षतिं विधायाऽपि स्वार्थं साधयामः । तेनाऽस्माकं कृते सर्वोऽपि स्वजनो, बन्धुजनो, विश्वजनो वा न केवलं हितकरो न भवति, अपि तु समये प्राप्ते प्रतिशोधपरोऽपि भवति । सर्वेषामनयैव मनःस्थित्या समाजे नैको जनः परं विश्वसिति । समाजो नाऽन्यं समाजं विश्वसिति । एतदेव हि वीजम् विश्वस्मिन्, राष्ट्रे, समाजे वा मिथो वैरस्य, विद्वेषस्य, कलहस्य, युद्धस्य, संघर्षस्य च । एवमाराष्ट्रमाविश्वमशान्तिरेव भवति, नो शान्तिः । एवं समाजे राष्ट्रे विश्वस्मिन् वाऽन्तरन्तः प्रधूमितो विद्वेषप्रतिकारयोर्वह्निर्न जात्वपि शमं प्रयाति । तेन विश्वस्मिन्नेव सर्वोऽपि जनो मिथः संशयेन, भयेन, त्रासेन च सदा कदर्थितो नैव जात्वपि शान्तिमनुभवति ।

मम प्रिया भ्रातरो भगिन्यश्च

भवन्तः पश्यन्त्येव सदा- सर्वेऽपि जनाः कार्यवशात् क्वचिद्बहिर्निर्गच्छन्तः स्वं स्वं गृहद्वारम् तालिकया नियन्त्रयन्ति । न च ते एकाकीभूय क्वचिद्दूरे गन्तुमपि सहसा शक्नुवन्ति । यतस्तेषां धारणा भवति- "निर्जने सति गृहे चौराः प्रविश्य धनं हरन्ति, एकाकीभूय क्वचिद्गच्छन्तं पथिकं विविक्ते तद्धनभूषणवसनादिकम् जिहीर्षवो दस्यव आक्रामन्ति इति ।"

नाऽस्ति तेषां सा धारणाऽपि निराधारा । तादृश्य एव घटना घटमानाः प्रायः श्रूयन्ते, दृश्यन्ते च समाजे । तदहं ब्रवीमि- "एष कीदृशः समाजो निर्मितोऽस्माभिः ? स्वार्थभावनया, तत्साधकक्रियाकलापेन च । वने वन्यानामपि जन्तूनां नैव दरीदृश्यन्ते सजातीयेषु मिथ एवं गर्हणीयाः शङ्काः, अविश्वासाः, विद्वेषाः, छिद्रप्रहाराश्च । धिगस्माकं वन्यसमजादपि हीनस्वभावम्,

गर्हणीयचरितम् मानवसमाजम् । धिक् चाऽस्माकम् नारकीयां सामाजिकीमिमां दु:स्थितिम् ।

भवन्तो विचारयेयु: "समाजे सुखीभावाय प्रभूतं धनमुपार्जनीयम् । धनाढ्यानां कृतेऽयमेव लोक: स्वर्गायते । किं दु:खम् का च वेदना ? धनप्रभावेण नैव किञ्चित्ते जानन्ति । "यस्यार्थास्तस्य मित्राणि" तेषां कृते सर्वा दिश: सुखमय्यो मित्रमय्यश्चेति" ।

नैतत्, आमूलमाचूडम् मिथ्यैषा धारणा भवताम् । किं कति वा वर्णयान्यहं वराकाणां तेषां धनिनामन्त: पीडाम्, अन्तर्वेदनाम् ? ते तु तस्यैव धनस्य विकारेण स्वस्य भार्यायामपि, पुत्रेऽपि सदाशङ्कापरा अविश्वासपराश्च कष्टेन समयमतिवाहयन्ति । दिवा नाना कर्मभि: श्रान्ता अपि ते रात्रौ द्वित्रतुरा अपि होरा: सुखेन नो स्वप्तुं पारयन्ति । यतस्ते सम्यग्जानन्ति- "यथात्मनो हृदयम्, तथैव सर्वेषाम् । दयया क्षमया सद्भावनया स्वार्थोत्सर्गेण च नैव जात्वपि धनार्जनं भवति । धनिनां धनाशयैव कलत्रपुत्रादयोऽनुकूला भवन्ति । स्वार्थनिबन्धना एव हि भावास्तेषां सर्वेषां जीवनतरूणां मूलानि सन्ति ।"

एतादृक्षानेव यक्षवित्तानात्मंभरींश्च धनिकान् प्रकृत्योपनिषदाचष्टे-

"मोघमन्नं विन्दते अप्रचेता:
सत्यं वदानि वध इत्स तस्य
नाऽर्यमणं पुष्यति नो सखायम्
केवलाघो भवति केवलादीति"

अर्थादुपनिषदेवमभिप्रैति- "मर्त्यजीवातुभूतं ह्यस्माकं खाद्यमन्नं नैव क्वचिद्विविक्ते कान्तारे कश्चिदेकाकी समुत्पादयितुं संरक्षितुं वा शक्नोति । ग्रामस्य जनपदस्य समाजस्याऽश्रय एव कृषि: संभवति विविधोपकरणसाहाय्यसापेक्षतया । प्राप्तेऽप्यावश्यकान्योपकरणनिकरे, समयेऽवृष्टे देवे नैवैकाऽपि कणिकाऽन्नस्य प्राप्तुं शक्यते । दृष्टप्रत्यक्षमनुभूतं चैतत्सर्वेषां कृषिजीविनाम् । तेन समाजे देवे च समानतया द्वयोरेवाऽयत्तमस्माकं कृषिफलमन्नादिकम् । येन वयं सदा स्वसमाजस्य देवानां च ऋणिनो भवाम: । तस्मात्तेषु सर्वेष्वस्माभि: सदा कृतज्ञैर्यथाशक्यं सेवापरैश्च भाव्यम् । अन्यथा महान् व्यतिक्रमो भवति ।" एतदविविच्य यो जनस्तेन कृषिफलेन न समाजं सेवते, नो देवान्, तस्य कृतघ्नस्याऽत्मंभरेर्जनापसदस्य कोऽधिकरोऽस्ति तयो: (समाजदैवयो:) अनुग्रहेण प्राप्तस्यान्नस्य भक्षणाय । भक्षयति चेत्स तथा, पापमेव भक्षयति, नाऽन्नम् । तादृशस्य केवलादिन: कृतघ्नस्य मृत्युरेव श्रेयान् नो जीवनम् इति"।

"सर्वे भवन्तु सुखिन: सर्वे सन्तु निरामया: ।

सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्जनः" ॥

एतामत्युच्चामतिमहत्त्वपूर्णाम् सर्वाभ्युदयाकाङ्क्षां पूरयितुं कर्मयोगस्य व्यावहारिकपक्षस्य कियान् सारगर्भोऽमृतमयश्चौपनिषदिक एष महानुपदेशोऽस्ति- "मोघमन्नं विन्दते अप्रचेता इति ?" एष क्रान्तिकार्युपदेशोऽस्माभिः स्वजीवन एवं स्वकर्मणि परिणमय्य प्रयोक्तव्यः- "अस्माभिः सर्वैर्मिथः प्रेम्णा, स्नेहेन, सौहार्देन, सद्भावनया च मिथो व्यवहर्तव्यम्, वर्तितव्यम् च । सर्वैः सर्वेष्वात्मभावो ग्रहीतव्यः मिथो निष्कामसेवाभावस्याऽनन्दानुभवेऽभ्यासो वर्धितव्यः । परदुःखस्य, परपीडायाः समाधानाय सर्वैः संभूय प्रयतितव्यम् ।"

एवं मनसा वाचा कर्मणा च सदा पालनीय एष नियमः एषा निष्ठा, एतद् व्रतम्, एष मन्त्रश्च नैवाऽस्माभिर्जात्वपि विस्मर्तव्यः । तथात्व इह लोके मिथो निर्वैराः, स्निग्धाः, सद्भावाः सन्तःसुखेन वयं जीविष्यामः । परलोके च तत्स्थानं प्राप्स्यामो यत्र कर्मयोगिनः प्राप्नुवन्ति । अस्मत्कृतेऽस्मात् "नाऽन्यः पन्था विद्यतेऽयनाय" श्रेयसे, निःश्रेयसाय च ।

मम प्रिय' भ्रातरो भगिन्यश्च,

सांप्रतम् प्रकृतसन्दर्भे एतावदेव प्रोच्य, तमेव सबलयितुमितः सन्दर्भान्तर मुपन्यस्यामि भवतां समक्षम् । यत एतावतां ग्रामग्रामान्तरबन्धूनां समागमः कदाचिदेव संभवति । तदिममनल्पं बन्धुसङ्गमं वक्ष्यमाणविषयस्य प्रचाराय स्वर्णावसरमेवाहं मन्ये । तत् सार्वजनीनतया प्रचारणीयमिमं मत्परामर्शं भवन्त आकर्णयन्तु, कार्ये परिणमयन्तु च । मत्परामर्शोऽस्ति मत्कर्मयोगोपदेशस्याऽविस्मरणाय, कार्यान्वयनाय च रचनात्मककार्यक्रम-रूपालम्बनप्रदानात्मकः । सर्वाऽभ्युदयोद्देश्यानुरूपतया स च भवतां रचनात्मकः कार्यक्रमो भवतात् रामायण कथाऽभिनयस्यैव । यतः पुत्रेण पितरि, भ्रात्रा भ्रातृषु, पत्न्या पत्यौ, सपत्न्या सपत्नीषु, प्रजाभी राज्ञि, राज्ञा प्रजासु, विश्वस्याऽन्येषु राजसु च कथङ्कारं वर्तितव्यमिति विषयेऽभिनीयाऽभिनाय्य च ग्रामग्रामेषु प्रदर्शितं तद्रामायणम् विश्वकल्याणाय विश्वस्य सर्वेषां जनसमुदायानां सर्वासां च जातीनां दृश उन्मीलयिष्यति । स्वतः श्रुतिमधुरा मनोहरा च तत्र भगवतो मर्यादापुरूषोत्तमस्य श्रीरामस्य पावनी कथा तथाऽभिनीय जनहृदयेष्वङ्किता इह परत्र च्चोपकारकम् कं वा दुःसाध्यमपि महान्तं पुरूषार्थं न साधयेत् ? एवं भूयोभूयः विश्वसंस्तुताया अपि तस्या एकाऽस्ति दुश्चिकित्स्या दुर्बलता !- सा लक्षश आवृत्ताऽपि श्रावकान् स्वल्पमपि तर्पयितुं न शक्नोति । अथवा कामं नैव शक्नोतु, का हानिरस्माकम्, प्रत्युत तेन महान् लाभ एव भवति- आनन्दोर्मय उच्छलन्ति हृदये । परमेष गरीयान् पुण्यः कार्यक्रमभारः प्रतिग्रामम् तत्रत्यैर्महाप्राणैरुत्साहसाहसस्फूर्तिदुष्प्रधर्ष्यैर्युवकैः स्वेन

स्वेन मांसलेन स्कन्धेन बोढव्यः इति तानहमनुरुणध्मि, दृढमाशासे च यथोक्तं कुर्वीरन्निति । पश्याम-भाविनो राष्ट्रविधायका अस्माकं युवका कीदृशीं स्वां जागर्याम्, सामयिकीं कर्तव्यपरायणतां च प्रदर्शयिष्यन्ते इत्युक्त्वाऽहम् विरमामि ।

स्वस्ति प्रजाभ्यः परिपालयन्ताम्
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यम्
लोकाः समस्ताः सुखिनो भवन्तु ॥
काले वर्षतु पर्जन्यः पृथिवी शस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥
अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥
कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात् ।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पये तत् ॥
ॐ नमः शिवाय



सन् श्रीदाममहोदयः करूषदेशस्य (साम्प्रतम् विहारप्रान्तान्तर्गतस्य) निम्नवित्तपरिवारे जात एको ब्राह्मण आसीत् । अस्य व्रतनियमनिष्ठामयं विशुद्धं निर्भीकं कर्मयोगिजीवनम् करूपदेशस्य प्रशासनेन नैव समन्वेतिस्म । क्व असत्यम्, परपीडनम्, शोषणं सङ्ग्रहश्च । क्व च सत्योपासना, आत्मबुद्ध्या भूतमात्रसेवा, परार्थे उत्सर्गः, दानम् च कथं नु स्यादनयोः सदसतोर्भावनयोः सामञ्जस्यं नाम ? किञ्च-कृष्णेन सह दन्तवक्त्रवधोत्तरमपि पूर्ववैरात् प्रच्छन्नमान्तरिकं शाश्वतिकं च वैरमस्त्येव करूपदेशराजसिंहासनस्य । श्रीदाममहोदयश्च कृष्णस्याऽनन्यमित्रमिति च न तिरोहितम् राज्यस्य । अत एव सदा तीक्ष्णया दृशां तत् तं विलोकयति च । तेनैवाऽद्य करूषदेशस्य राजसभाया उपवेशोऽस्ति । राजानमुपेत्य मन्त्रिणः श्रीदामविषये विवृण्वन्तः सन्ति ।

राजा-"किमस्ति विचारणीयमद्य ?"

प्रधानमन्त्री-"श्रीदामविषये किञ्चिन्निवेदनीयमस्ति महाराज ।

राजा-"कथय"

प्रधानमन्त्री-"परुत् कार्तिकमासस्य पञ्चदशे दिनाङ्के नीलकण्ठग्रामस्य मञ्चकनिर्माणसंबन्धिनि समारोहे, बृहति जनसमूहे प्रवचता तेन प्रभुचरणानामवमूल्यनम् क्षुद्ररजकस्याधिमूल्यनम् च विहितमिति राज्यदण्डसंहितानुसारम् स एकवर्षं यावत् प्रशासनेन बन्दीकृत्य दण्डितः । तदनु काराध्यक्षविवृत्यनुसारम् कारायां स्थितः स नैकमपि स्तोकमपि तत्रत्यनियममुल्लङ्घितवान्, प्रशासनम् राज्यव्यवस्थां च नाऽक्षिप्तवान्, तथाकस्मिंश्चिदन्यस्मिन् । विषयेऽप्यर्थात् आचरणे, संलापे, संपर्के च वचसा, कर्मणा वा नैव किञ्चिदतिचरितवानिति निकटेऽतीतसमये प्रभुचरणान् निवेद्यैव प्रशासनेन स कारातो विमोचितः ।

साम्प्रतं पुनरस्माकं गुप्तचरविभागस्तद्विषये सविवृति प्रशासनमेवं सूचयति- "अस्यैव मासस्यैक विंशे दिनाङ्के शुक्रवासरे वराहग्रामसत्सङ्गाश्रमे विशालजनसमूहे देशस्य सर्वान् युवकान् संबोध्य स एवं प्रावोचत्-"राज्ञा प्रजासु, प्रजाभी राजनि का नीतिः कर्तव्या, कथङ्कारं वर्तितव्यम् चेति विषये जागरूकम् ज्ञानं राष्ट्रस्य सर्वाङ्गीणाय कल्याणाय भवति । एतदर्थे देशस्य समस्तैर्युवकैः संभूय ग्रामे, जनपदे, नगरे च रामायणकथाऽभिनीय समाजे प्रदर्शनीया । एवं क्रियमाणे देशस्य कृते युवकानां महदवदानं भविष्यति । सम्यगेतद् बुद्ध्वा देशभक्ता अस्मद्युवकाः स्वदेशस्य कल्याणाय स्वां जागर्याम् कर्तव्यपरायणतां च प्रदर्शयिष्यन्त इत्याशासे आस्मिन् पुण्यकार्ये यदि युष्मान् नास्तिकास्तर्जयेरन्

भर्त्सयेरन्, कुत्सयेरंश्च तथाऽपि युष्माभिर्नैव किञ्चिदपि भेतव्यम्, युष्मान् विश्वविश्रुतविक्रमो महावीरो मारुतिः संरक्षिष्यति ।

तस्यैतया प्रवचन भङ्ग्या एवं विज्ञापितं भवति-

(१) श्रीदामाऽस्माकंप्रशासनात्, व्यवस्थायाश्चाऽसन्तुष्टोऽस्ति ।

(२) तस्मात् भगवतो रामस्य शासनं, व्यवस्थांच मञ्चेऽभिनीय, समाजे प्रदर्श्य अस्माकं शासनम्, राज्यव्यवस्थां च प्रतिकर्तुं बृहतो विद्रोहि जनसंघटनस्याऽवश्यकतया तदर्थं स देशस्य समस्तान् युवकान् संबोध्योत्तेजयन्नस्ति । यस्मिन्नुपाये कृतेऽस्माकं वर्तमानात् प्रशासनात् राज्यव्यवस्थायाश्च सर्वाः प्रजा अपरज्येरन्, तथा कर्तुं स आराष्ट्रं विद्रोहवह्निं धमन्नस्ति । तेनैवं स्थिते, अस्मिन् विषये किं कर्तव्यमिति प्रभुचरणेष्वस्माकं निवेदनम्"।

राजा-"एवं स्थितेऽस्यं किं प्रतिविधानमिति प्रथमं यूयमेवैकैकशः स्वं परामर्शं प्रयच्छत"।

तत्र मन्त्री ब्रह्मदेव शुक्लः प्रोवाच- "महाराज ! सुपरिचितो विद्रोह्येष श्रीदामा । गतकारावासोऽस्य सप्तमः कारावास इति प्राप्तविवृत्या ज्ञायते, समय-समये राहुश्चन्द्रमिवाऽतङ्कयत्येषोऽस्माकं प्रशासनम् इति च । तेनाऽसौ बध्यचरितोऽस्ति । परमस्माकं दण्डसंहितायाम् ब्राह्मणविहिंसनं निषिद्धमस्ति । तेनेमां दण्डसंहितां संशोध्याऽप्यसौ मृत्युदण्डेन योजनीय एव ।"

मन्त्री रत्नाकरवर्मा- "एकस्य विद्रोहिणः कृते परम्परागताया दण्डसंहितायाः संशोधनं नार्हति । वरम् मृत्युदण्डस्य स्थाने तस्मै ह्याजीवनकारावासदण्डो देयः"

राजा- "कारातो गतविमुक्त्यवसरे "अतः परमेवं न करिष्यामीति" प्रतिज्ञापत्रलेखनाय नाऽनुज्ञप्तः स प्रशासनेन ?"

मन्त्री रत्नाकरवर्मा- "तस्यैवं व्रतमिवाऽस्ति । यदेष न क्षमां याचते मुखेन, न च तथा प्रतिजानाति लिखितेन । प्रकृतिर्विचित्राऽस्त्यस्य । आजीवनं कारायां संयमितेऽपि नाऽसौ मनागपि दुःखीयति । प्रत्युत काराया विविक्तं शान्तं वातावरणं तस्य ध्यानचिन्तनकीर्तनादये विशेषतोऽनुकूलमिति तत्र निवासाय सप्रहर्षं स्पृहयत्यसौ । कारातो मुमुक्षैव नास्ति, ईदृक्स्वभावो जनः कथं तत् प्रतिजानीयात् ? यथायथमस्य प्रकृतिः ज्ञातचराऽस्ति प्रशासनेन- "नियमनीयोऽस्ति नाऽसौ कयाचिद्विभीषिकयाऽपि । तेनाजीवनकारावासदण्डं विना नाऽन्यदस्ति प्रतिविधानमस्य । तथात्वे तस्मिन्नपि सन्तोषः, प्रशासनेऽपि नानाविषाक्त प्रचाराणामवरोधात् शान्तिरेवेति उभयत्रैव हितसाधनं भवेत् ।"

मन्त्री धनेश्वर मिश्र- "जात्वपि नो प्रशासनं स्वकर्मणा देशे विविधाकाङ्क्षावतोऽखिलान् जनान् सन्तोषयितुं शक्नोति । तस्यां स्थितौ एवं तस्मै दीर्घकारावासदण्डे दीयमाने प्रशासनादसन्तुष्टा जनास्तत् प्रतिकर्तुं श्रीदामानं भूयोभूयश्चर्चोपचर्चाविषयीकर्तुं प्रारप्स्यन्ते । ततो बहुसंख्यकम् जनमतं विनैवोपकारं तस्य समर्थकम्, प्रशंसकं भविष्यति । अन्ततो गत्वा राज्याङ्गेषु कस्यचन (राज्याङ्गस्य) समानान्तरशक्ते रूपं स ग्रहीष्यते । एवं दीर्घं भविष्यं समीक्ष्याऽहं ब्रह्मदेवशुक्ल महोदयस्यैव मतं समर्थयामि । प्रचलितां दण्डसंहितां संशोध्याऽपि हन्तव्योऽयं राज्यशत्रुः । तथात्वे एवमेव प्राणदण्डभयाज्जनास्तच्चर्चोपचर्चां कर्तुमपि नो शक्ष्यन्ति, तन्मार्गानुसरणं दूरत एव आस्ताम् । राजनीतिविरूद्धा खलु रिपावनुकम्पा । नैव त्यक्तव्या तेजस्विता प्रभुत्वकामिनां नृपाणाम् । उक्तं च नीतिशास्त्रे-

"मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विषः" इति ।

ततो राजा मन्त्रिणं प्राणनाथभट्टाचार्यं पृष्टवान्-"एवं स्थिते त्वं किं मन्यसे ?"

मन्त्री प्राणनाथभट्टाचार्यो राजानं निवेदयामास-"महाराज ! धनेश्वरमिश्रः श्री दामानं 'राज्यशत्रु' शब्देन यद् विशेषयति, सत्यतया तदहमपि संमन्ये । परं तथात्वेऽपि आजीवनं कारावासदण्डो मृत्युदण्डो वै तद्द्वयमेव तदर्थे नोपयुक्तम् । यतोऽनयोरेकतरो यः कोऽपि दण्डस्स्यात्, स एनमजरामरं विधास्यति । तेन राज्ये सर्वाणि प्रशासनिकान्यङ्गानि द्रढनीयानि । सर्वत्र निरीक्षणार्थं च प्रहरिणां ब्रम्भ्रमणं सञ्चालयितव्यम् । स्थानीयप्रशासनस्याऽनुमतिं विना त्रिभ्यो जनेभ्योऽधिकानां जनानां संमेलनं सर्वत्र निषेद्धव्यम् । सर्वत्र प्रवचनकार्यक्रमो निषेद्धव्यः । एतादृशानां विद्रोहिचेष्टितानाम् ज्ञानाय ग्रामे, नगरे, जनपदे च सर्वत्र चतुराश्चाराः केचन याचकरूपाः, केचन यतिरूपाः, कतिपये मौहूर्तिकरूपाः, हस्तमुद्राप्रेक्षकरूपा वा भ्रामयितव्याः । सति बलवद्दृढे, सक्रिये च प्रशासने एतादृशानां विद्रोहिणामस्तित्वमचिरेणैव तिरोधास्यते"।

राजा प्रधानमन्त्रिणं दिवाकरत्रिपाठिनम् प्रोचे-"त्वं किं मन्यसे ?"

प्रधानमन्त्री राजानम् निवेदयामास-"महाराज ! यदाह प्राणनाथभट्टाचार्यः, तदेवाऽहं सामयिकमुपयुक्तं च मन्ये । एतद्धि मम हृदयेनैव संमन्त्र्य तेनोक्तम् । एवं विद्रोहिषु स्वशिरांस्यून्नमयितुं प्रारम्भमाणेषु सर्वप्रथमं स्वं प्रशासनयन्त्रमेव द्रढनीयमिति स्थानेऽस्ति युक्तिपूर्णोऽयं परामर्शः । एवं विषमां स्थितिमनुलोमयितुं प्रशासनेन दृढेनोग्रदण्डेन च भाव्यमेव । तत एवैतादृशा रिपवोऽचिरेण सुखोच्छेद्या भवन्ति ।"

मन्त्री रत्नाकरवर्मा-"महाराज। अतिगम्भीरोऽयं राजनीतिको विषयः। साधारण तया दुरवगमा हि परिणामा राजनीतिकानां कार्यारम्भाणाम्। तेन राजनीतौ नैकोऽपि विषय एकदृष्टिभिरेव पक्षैविर्चिन्त्य निर्णयः तद्यदि प्रभुचरणा आदिशन्ति, कार्यगौरवात्परामर्शविशेषाय ज्ञानेनाऽनुभवेन वयसा च परिपक्वं वृद्धं भूतपूर्वप्रधानमन्त्रिणं वयमामन्त्रयामो रघुवीरभट्टाचार्यम्।"

राजा-"उचितमुक्तं त्वया। आमन्त्रयत तम्। मत्पितू राज्यसमये बहुसमयपर्यन्तं प्रधानमन्त्रिपदमधिष्ठाय प्रभूतमनुभवमर्जितवानसौ अवश्यमस्मभ्यः सामयिकमपरिहार्यं च परामर्शं दास्यति"।

मन्त्रिणः- 'यदादिशन्ति प्रभुचरणाः"।



ईषच्छिरोनमनेन रघुवीरस्य प्रणामं स्वीकुर्वन् राजा तं प्रोवाच- अपि कुशली ह्यसि रघुवीर ।"

साञ्जलिबन्धं रघुवीरः प्रत्युवाच-"प्रभुचरणानां कृपयाऽद्य यावत् किञ्चिच्चलन्नेवाऽस्मि । कीदृगस्ति स्वास्थ्यम् प्रभुचरणाम् ? यदाधारितमस्ति देशस्याऽस्माकं प्रजाजनानां च सौभाग्यम्" ।

राजा-"कुशल्येवाऽस्मि । वयः कियज्जातं तव ?"

रघुवीरः- "गतमाघमासतोऽशीतितमे वर्षे कृतप्रवेशोऽस्मि"।

राजा- "त्वं तु मत्पितुः समयस्य वर्तमानसमयस्य च देशस्थितेः प्रत्यक्षद्रष्टाऽसि । तद्वद- "देशेऽनयोर्द्वयोः समययोः सौस्थित्ये कियदन्तरं पश्यसि ?"

रघुवीरः- "सर्वं वस्तु क्षणिकं भवति । तस्याऽस्य च समयस्य चस्थितौ तुलितायाम् आकाशपातालयोरेवान्तरं भवति । परिवर्तनशीलम् समयस्वभावमन्यथयितुं न शक्नुमो वयम् । प्रभुचरणानां कृपया सर्वसंपन्नस्याऽपि मे यदि तथा शक्तिरभविष्यत्, नो मामीदृशम् शक्तिक्षयकरं वार्धक्यम् अपीडयिष्यत् । कोऽस्त्यस्य प्रतिकारः सृष्टेः शाश्वतनियमस्य ? तस्याऽस्य च समयस्य स्थितौ महतोऽन्तरस्य सद्भावेऽपि, अधरोत्तरभावस्य वा साक्षाद्भावेऽपिं वर्तमानां स्थितिं प्रतीपयितुं, पूर्वस्यां स्थितौ तां प्रापयितुं च जलप्रकृतिमिव नैव शक्यते । किञ्च-किमर्थमद्य प्रभुचरणा अस्मरन् अस्य चिरसेवकस्य ?'

राजा- "मत्पितू राज्यसमयस्य प्रधानो मन्त्रीति बृद्धत्वेन, परिपक्वत्वेन, अनुभववत्त्वेन च वयं त्वत्त एकस्मिन् विषये सामयिकं परामर्शं जिघृक्षामः"।

रघुवीरः-"महाननुग्रहोऽयं स्वसेवके प्रभुचरणानाम्"

राजा प्रधानमन्त्रिणमुवाच- "श्रीदामविषये यद्यदाख्येयमस्ति, तत्सर्वं विवृत्य श्रावय रघुवीरम् । युष्माभिः प्रदत्तान्परामर्शांश्चैकैकशः कृत्वा......"।

प्रधानमन्त्री- यदादिशन्ति प्रभुचरणाः"

ततः प्रधानमन्त्री राजाज्ञानुसारम् श्रीदामविषयकम् कृत्स्नम् विवरणम्, तत्सन्दर्भे मन्त्रिभिः प्रदत्तान् वैयक्तिकान् पृथक् पृथक् परामर्शाञ्च वृद्धं रघुवीरम् श्रावयित्वा प्रोवाच-"एवं स्थितेऽस्माकं किं कर्तव्यं मन्यते भवान् ?"

तदाकर्ण्य, क्षणं विचार्य च रघुवीरः प्रधानमन्त्रिणं प्रोवाच- अस्त्येतद् भवतां विवरणं श्रीदामविषयकम् सर्वमभ्रान्तं यथार्थं च ? अन्यथा तदाधारे मया दत्तः परामर्शोऽपि तथैव सकल एवाऽनुपयुक्तोऽसामयिकश्च भविष्यति ।"

प्रधानमन्त्री- "अस्ति यथार्थमेव"

रघुवीरः- तर्हि-"भवताम् विवरणानुसारम् "निष्कामो निरीहः कर्मयोगी" ति श्रीदामानमहं पर्यचिनवम्" । परमहं चित्रीये यत्- तथा तं विवृण्वन्तो भवन्त एव तं दूषयन्ति 'विद्रोही' ति । एतत्तु नैव संभवति । यतो विद्रोहभावना रजोगुणप्रसूता भवति, तत्र विद्रोहिणोऽनेका भौतिक्य आकाङ्क्षा भवन्ति । तद्विपरीतम् कर्मयोगभावना ःसत्वगुणप्रसूता भवति । तत्र सर्वासामप्येषणाना मत्यन्ताभाव एव भवति । तेनैकस्मिन्नैव कस्मिंश्चन जने विद्रोहित्वस्य कर्मयोगित्वस्य च सामानाधिकरण्यं नैव संभवति । तेन श्रीदामविषये भवत्कृतस्य विवरणस्य तस्मिन् कृतस्य दोषारोपणस्य च नैव सङ्गतिर्घटते । विनैव विवेकं पात्रापात्रयोः, कार्याकार्ययोश्च प्रसादनिर्णयस्याऽकरणीयत्वात् प्रथमं तु स एव निर्णयः कर्तव्यः । मन्ये भवन्तो विनैव पात्रविवेकम् तमदण्डयन् । वहिर्गृहस्थ इव दृश्यमानोऽपि स वस्तुतो वीतरागो लक्ष्यते । भवन्त एव वदन्ति- "आजीवनं कारायां संयमितेऽपि किं मां संयमितवान् त्वमिति संयन्तारं स नैव पृच्छति इति"। सत्यमेतत्, भौतिकं कञ्चिल्लाभं लक्ष्यीकृत्य यो नैव किञ्चिच्चिकीर्षति- जनसंघटनम्, जनसंपर्कम्, समविचारैः जनैः सहसंपर्कादिकं च, स मुधा किमर्थम् कारातो निर्जिगमिषेत् ? तदर्थे प्रयस्येच्च ? अन्यत् तथाऽप्रतिमशक्तिशालिनः कृष्णस्य तथा दयितः सखाऽयं यद्यर्थलुब्धोऽभविष्यत्, तर्हि कति वा संपदोऽलप्स्यत, अथवा एतस्यै राजसत्तायै अद्रोक्षत्, तत्साहाय्येनैतां कस्यां दुःस्थितौ प्रापयिष्यत् । तेन भवन्तो मह्यं मा कुप्यत, अहं पुनरपि भवत एव दूषयामि- "विनैव पात्रविवेकम्, विनैव तस्य कार्यस्य, कथनस्य, प्रवृत्तेश्च मूल्याङ्कनम् तं भवन्तो बन्दीकृतवन्तः । किञ्च-विश्वोपश्लोकितचरित्रस्य भगवतो रामस्य कथायाः, तत्प्रसक्त्योः स्वधर्मसंस्कृत्योः प्रचारेण च का हानिः राष्ट्रस्य, राज्ञः, प्रजायाश्च ? तेन कर्मणा किं कश्चित् राज्यविद्रोही भवेत् ? अपरं च-देवता भावनामात्रग्राहिणो भवन्ति, न वस्तुग्राहिण इति तात्पर्यबोधाय, कर्मयोगभावना प्रचाराय च राजरजकौ स उदाहरणाय उदलिखत् । न कञ्चन राजानमुद्दिश्याऽवधीरयितुम्, न च कञ्चन रजकमुद्दिश्य प्रशंसितुम् स तावुल्लिखितवान् । एवमस्थाने यो दण्डप्रयोगो विहितो भवद्भिः तत्परिणामा अनिवार्यतयैवं भविष्यन्ति, अथवा संभवेत्, भवितुमारब्धवन्तश्च स्युः-

(१) राज्यस्य विवेकशक्तेर्ह्रासस्य पतनस्य च स्पष्टतया विज्ञापनम,

(२) अत्र शुद्धा न्यायवितरणपरिपाटी नास्तीति विरोधिनां मिथ्या कथनस्य सत्यापनम्,

(३) सचेतनस्य प्राज्ञसमाजस्य दृष्टौ राज्यप्रशासनस्य पातः, यो राज्ये नाऽतिचिरेण महत् संकटम् आपातयति,

(४) सत्तां हस्तयितुं प्रशासकान् प्रजिहीर्षतां राष्ट्रकण्टकानाम्, राष्ट्रमेव प्रजिहीर्षतां प्रतिपक्षराष्ट्राणां च प्रहारसौविध्याय स्वच्छिद्रप्रदर्शनम्,

(५) राज्यप्रशासनस्योत्तरोत्तरम् अपवादस्याऽकीर्तेश्च संवर्धनम्,

(६) प्रजाभ्यो नवविद्रोहभावनाया उन्मेषस्य प्रदानम्,

(७) कृष्णस्य परममित्रतया तस्य, राष्ट्रियस्थितौ चैवमुत्तरोत्तरं भ्रंशमुपगतायाम् अन्ते राष्ट्रस्यैव दुष्परिणामे प्राप्तिश्चेति"।

राजा सस्मितम् रघुवीरं प्रावोचत्- "रघुवीर । त्वं यदकथयः, तेनेदानीमहं बहु प्रबोधितः । सत्यम् मत्प्रशासनेनाऽस्थान एव स दण्डित इति सांप्रतं ममाऽपि तज्ज्ञानम् जातम् । तदास्तां तावत् । समीचीनमसमीचीनं वा यत्कृतं तत्तु कृतमेव । यज्जातम्, तदपि जातमेव । अथाऽस्य प्रतिकारः कथं संभवेत् ?"

रघुवीरः- "ईदृशान्यसमीक्ष्य कृतानि कार्याणि यदा राज्यं लाञ्छयन्ति, तदा राष्ट्रप्रमुखेण तत्प्रतिकाराय तत्कालमेव तत् प्रशासनयन्त्रं विघटनीयम् नवं च संघटनीयम् । नवागतेन तेन प्रशासनयन्त्रेणाऽपि पूर्वं प्रशासनयन्त्रं साम्रेडं दूषणीयम् ससमुद्घोषम् । तथात्व एवं तस्य दोषस्य परिहारो भवति, बहिः प्रजासु, प्राज्ञवर्गेषु । एतद्वर्जं नाऽन्योऽस्ति मार्गस्तत्प्रतिकाराय ।"

राजा- "आम्" ।

रघुवीरः-"किञ्च-मन्त्रिमहोदया यदमन्यन्त तम् 'विद्रोही' इति । तथात्वेऽपि तेनैव विधिना प्रथमं तु प्रशासनयन्त्रमेव दूषणीयं भवति । तत्पश्चात् तद्व्यतिरिक्ते द्वे अन्ये क्रिये अपि प्रभुचरणानां कर्तव्ये भवतः राज्ञः प्रजायाश्च हिताय सहायके भवतः-

एका- "पुण्यदिनेषु श्रीदाम्नः धार्मिकं प्रवचनं श्रोतव्यम् । तदर्थे संमानमामन्त्रणम्, सम्यक् दक्षिणादिप्रदानं च कर्तव्यम् । तेन तत्परिवारो नवनवानि सुन्दराणि वस्त्राभूषणानि परिधातुं प्रारप्स्यते । येन तस्य विद्रोहिव्यक्तित्वं ततः परं जनान् प्रभावयितुं नैव शक्ष्यति, तत् क्रमशो भूमिसाद्भविष्यति च ।"

अन्या- तस्य रामलीलाभिनयप्रचाराय सर्वकारपक्षत एव बहु साहाय्यप्रदानं कर्तव्यम् । येन प्रचारो राष्ट्रव्यापी भवेत्, तथा प्रयतितव्यम्" ।

अनयोपजापनीत्या तस्य प्रजाभिः सम्बन्धविच्छेदो भविष्यति । यतस्तत्पश्चात् स यत्करोति, प्रचारयति च तत्सर्वम् सर्वकारस्य कार्यक्रमान्तर्गतं भविष्यति । तेन जनसमाजे "एष राज्ञो भक्तः, राज्ञा स्वीयहिताय तथा कारितः, प्रच्छन्नवैतनिकोऽयं राज्ञ इति" भूयान् प्रचारो भविष्यति । तत एनं कोऽपि जनो नैव विश्वसिष्यति, नचाऽनुगमिष्यति तेनाऽस्य विद्रोहभाववह्निरतृणे प्रदेशे पतितो वह्निरिव स्वतोऽचिरेण प्रशाम्यति, अगत्या स राजभक्तश्च भविष्यति साहाय्याभावदन्यतः कुतोऽपि । ततो विद्रोहाय जनैर्मिलितुं नैव जात्वपि स शक्ष्यति । किं स्यात्तेनाऽस्माकम् ?"

यदि च स भवद्विवरणानुसारम् मया परिचितः कर्मयोग्येव भवेत् तस्मिन् पक्षेऽपि, एते द्वे कार्ये तं प्रीणयेतामेव । तत एकेनैव बाणेन द्वयोर्लक्ष्ययोर्भेदनं भवेत् । अर्थात् विद्रोहित्वे तस्य विद्रोहोऽकिञ्चित्करो भविष्यति, कर्मयोगित्वे च तस्य संमानो धर्मसंस्कृतेरेव संमानो भविष्यतीत्येवं धारणया राज्यं प्राज्ञविद्वज्जनसंमतं भविष्यति च । तदेव हि राज्यस्य साफल्यं नाम ।"

राजा- "एकान्ततः समीचीनोऽयं परामर्शो रघुवीरस्य ।"

रघुवीर-"तथात्वे नैव भेतव्यमस्मात्" ।

मन्त्रिणः-"अस्मान्नैव विभीताः स्मो वयम् । कृष्णस्य तथा मित्रत्वेन कालान्तरे किमप्यस्माकं विप्रियं भवेदित्याशङ्कयैव वयमेवं ब्रूमः"

रघुवीरः प्रहस्य मन्त्रिणः प्रोवाच-"किमेवं बालवद् भाषन्ते भवन्तः । निकटस्थात् अस्यैव कर्मयोगात् विभ्यतु भवन्तः नो दूरस्थात् कृष्णात् । अस्य निष्कामः कर्मयोगः सर्वान् राष्ट्रवासिनः प्रभावयन्नस्ति, साकल्येन क्रमशः प्रभावयिष्यति च एवमनादरेणाऽस्मिन् प्रतिपक्षीभूते सर्वे राष्ट्रवासिनः सर्वकारस्य प्रतिपक्षीभविष्यन्तीति भविष्ये संभाव्यं प्रागेव विचारणीयम् प्रतिकर्तव्यम् च भवद्भिः प्रशासकैर्विधायकैश्च राष्ट्रस्य । प्रकृतिप्रकोपः सर्वेभ्यः कोपेभ्यो गरीयान् भवतीति नीतिविदां दर्शनम् ।

"प्रजापीडनसन्तापात्समुद्भूतो हुताशनः ।
राज्ञः श्रियं प्रजां राज्यं चाऽदग्ध्वा न निवर्तते" ॥

साधारणेऽपि जने जातमन्यायं सवर्गीयतया प्रजावर्गः स्वस्मिन्नेव जातं मन्यते । तत्राऽपि स श्रीदामा तु जनानां प्रियो विश्वस्तश्चैको मूर्तो जनशक्ति समुच्चय इवाऽस्ते । भौतिकसंपन्निरपेक्षतया सोऽस्माकं प्रशंसाभिर्वा राज्ञः पावनैरपि दृष्टिपातैर्धन्यम्मन्यो नैव भवेत् । न केनाऽपि प्रलोभनेन तं तत्सिद्धान्तात् वयं विचालयितुं शक्नुमः । स स्वदर्शने, स्वसिद्धान्ते भूधरवत् दृढो भवति । संकटकाले राजप्रजयोर्यदीयं पक्षं स गृह्णीयात्, स एव पक्षो बलवत्तरो भवेत् । तेन नोपेक्षणीयोऽस्ति श्रीदामा भवद्भिः परं

प्रभुचरणैर्भवद्भिश्चैतत्पूर्णतयैव विस्मर्तव्यम्- "स विद्रोही अस्तीति । अहं पुनः पुनरपि तदेव स्वं परामर्शमावर्तयामि- "एवं कमठत्वात्, जनविश्वासपात्रत्वाच्च तस्योपेक्षाऽनादरो वा नैव नीतिसङ्गतो भवेत्, न च राष्ट्रहिताय भवेत्' इति विचारणीयं भवति भवताम् इति" ।

ततो राजा मन्त्रिणः प्रोवाच-"परिपक्वेन, तीक्ष्णेन, अनुभववता च दृष्टिकोणेन रघुवीरप्रदत्त एष परामर्शो युष्माभिः कार्ये परिणमयितव्यः" ।

रघुवीरोऽपि मन्त्रिणः प्रोवाच-"मन्त्रिमहोदयाः । मद्वचनं नैव विस्मर्तव्य्-"सोऽयं मे परामर्शस्तथात्व एव सामयिक एवमुपयुक्तश्च भविष्यति, यदि श्रीदामविषये भवद्भिः प्रत्तं विवरणम् अभ्रान्तं यथार्थं च स्यात् । तथात्वेऽलमिमं श्रीदामानं चाऽन्यथा संभाव्य ।" ।



हरिशयन्येकादश्याः पुण्यं दिनमस्ति । राजप्रासादस्याऽधस्तन भूमिकाया महति कोष्ठे प्रवचनकार्यक्रमः सञ्चालयिष्यमाण आसीत् । कोष्ठस्य पूर्वोन्मुखभित्तेराश्रय एकं महदुपवर्हसंयुक्तं शुक्लस्वच्छवसनाच्छादित-मुच्चमासनमासीत् । तस्याऽप्यग्र ईषदरुणवसनाच्छादितस्थापितद्वित्र-सपुष्पपुष्पधानीका खट्विका च । तदुच्चासनमध्यासीनो स्रजगुरुणा कण्ठे आसज्जितपुष्पमाल्यः श्रीदामा धार्मिकप्रवचनाय तत्पर इतस्ततो दृष्टिं निक्षिपन्नासीत् । ततोऽग्रत उच्च आसने राजा राज्ञी च साधारणवेषेण प्रवचनाकर्णनायोपविष्टावास्ताम् । तयोर्दक्षिणपार्श्वतो राजगुरुपुरोहितादयो, वामपार्श्वतः सामन्तसमूहः, पृष्ठतश्च धीसचिवाः, कर्मसचिवाः, महाभात्राश्च यथामर्यादाक्रमं यथास्थानमुपविष्टा आसन्, तथैतेषामपि पृष्ठतोऽन्तर्वेशिकाः, कञ्चुकिनो, वर्षवराः, तथाऽन्ये प्रासादसेवकप्रमुखाश्च । ततः श्रीदामा प्रवक्तुमारेभे

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ॥

आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठा सभेयो युवास्य यजमानस्य वीरो जायतां निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्ताम् योगक्षेयो नः कल्पताम् ।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाजनः ॥

धर्मावतारभूताः करुणावरुणालयाः श्रीमन्महाराजाः, वात्सल्यमय्यो देवीसरूपाः महाराज्यः। गण्यमान्या राजगुरवो, धीसचिवाः कर्मसचिवास्तथान्य उपस्थिता भद्रजनाश्च ।

नितान्तमेव महतो हर्षस्याऽयं विषयो यदस्मद्देशे- "दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः । अपक्षपातोऽर्थिषु राष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणाम्"- इति स्मृत्यनुसारमनुष्ठेयानां राजकर्तव्यभूतानां पञ्चयज्ञानां परंपरां प्रवर्तयन्नपि राजा धर्मचर्चायां सदाबद्धरूचिर्गाढश्रद्धश्चाऽस्ति । एतद्धि राष्ट्रस्यैव शुभोदर्कस्य लक्षणम् । यतो धर्मप्रियो हि राजा धर्मधियैव राज्यं करोति । यत्र च धर्ममूलकं राज्यं प्रवर्तते, तत्र भवबन्धनकारिण्याः प्रवृत्तिभावनाया निरोधो

भवति, मोक्षदायिन्या निवृत्तिभावनाया अनासक्तिभावनायाश्च प्रसारो भवति। येन राजनि प्रजासु च मिथोऽनुरागात्सुखसमृद्धेः
शान्तेश्चाऽनिवार्यतया वृद्धिर्भवति। यत्र चाऽधर्ममूलकं राज्यं प्रवर्तते, तत्र मोक्षदायिन्या निवृत्तिभावनाया निरोधो भवति, भवबन्धनकारिण्याः प्रवृत्तिभावनायाश्च प्रसारो भवति, येन कामक्रोधलोभमोहमदमात्सर्याणामैकान्तिकी वृद्धिर्भवति। यत्कारणाद्राजनि प्रजासु च मिथोऽपरागादाराज्यं विद्रोहनिबन्धनाऽशान्तिर्भवति। सैव राष्ट्रियैकताया विघटनस्य, राष्ट्रियनिर्माणविकासयोरवरोधस्य, तन्मूलकस्य सार्वजनिकदुःखदारिद्र्यकष्टसमुदायस्य च कारणम् महाकारणं भवति। अतोऽस्माभिः राष्ट्रस्य प्रजानां चं संरक्षणाय प्रथमतो धर्म एव संरक्षितव्यः। यतस्तस्मिन् संरक्षिते तदेव राष्ट्रे संरक्षणीयं सर्वं संरक्षिष्यति-"धर्मो रक्षति रक्षितः"। तेन कोऽसौ धर्मः? इत्येतन्निर्णेतव्यम्।

यस्मात् कर्मविशेषात् साधकानामभ्युदयस्य निःश्रेयसस्य च सिद्धिर्भवति स धर्म इति विद्वांसः परिभाषन्ते। तत्र "सर्वजनस्य समानं कल्याणं भवतु सामूहिकजीवनस्य कार्यक्रमो निष्प्रत्यूहं सञ्चलतु, ईश्वरेच्छानुसारम् सृष्टेः प्रवाहश्च विनाऽवरोधं प्रगच्छतु, विश्वस्मिन् सर्वत्राऽभ्युदयमयी शान्तिर्भवतु" इत्याकारकैहिकाभ्युदयाय धर्मो विश्वमानवान् "एकेन जनेनाऽन्यस्मिन् जने, एकेन समाजेनाऽन्यस्मिन् समाजे, एकेन राष्ट्रेणाऽन्यस्मिन् राष्ट्रे, तथा विश्वस्मिन् वा कथं वर्तितव्य मित्यनुशास्ति। तथा निःश्रेयसाय च धर्मस्तं मार्गम् साधकाननुशास्ति, येन गच्छन्तः साधकाः प्रारब्धकर्मफलभोगाय नानाप्रपञ्चकर्मविवशाः सन्तोऽपि कर्मबन्धनमु ाः सन्तः पारेभवसागरं प्राप्य शाश्वतीं सुखशान्तिं निर्वेष्टुं शक्नुयुः"

तेन धर्मः संक्षिप्यैवं परिभाषितुं शक्यते-"यया प्रक्रियया मनुष्यस्यैहलौकिकं पारलौकिकं च जीवनं सफलं सुखमयं च भवति, राष्ट्रस्य समाजस्य विश्वस्यैव वा शान्तिपूर्णमभ्युदयमयं च व्यवस्थापनं भवति, सैव प्रक्रिया धर्मपदवाच्या भवतीति"।

प्रक्रियाविषये यद्यपि धर्मत्वेन व्याख्यातुं शक्यास्तादृश्यो बह्व्यः उप प्रक्रिया लोके प्रचलन्ति, कूपखनन- मञ्चकनिर्माण- धर्मशाला निर्माण- रोगिसेवादिकाः, तथापि प्रमुखतया तिस्र एव प्रक्रिया विद्वद्गणनायाम् आयान्ति, विद्वांसस्ता योगशव्देन व्यवहरन्ति-ज्ञानयोगः, भक्तियोगः कर्मयोगश्चेति। एते त्रय एव योगमार्गाः समानभावेनैव साधकानां महदुपकुर्वन्ति।

समानमहिमस्वप्येतेषु त्रिषु मार्गेषु साधका रुचेः प्रवृत्तेर्लक्ष्यस्य च भेदेनैकतमं स्वाभीष्टमनुसरन्ति। अत्र विषये कर्मयोगिनां मतमेव संमतमस्ति

ममाऽपि । तेन तदेव मतमनुसृत्य वदामि-"बहिर्वयमेतद् विश्वं विनश्वरस्य जडतत्त्वस्याऽविनश्वरस्य चेतनतत्त्वस्य च संमिश्रणेन निर्मितं पश्यामः । परं सर्वेषु चेतनेषु च तत्त्वेषु जीवनं भवत्येव । क्वचित्तदाविर्भूतं भवति क्वचिच्च तिरोहितम् । परं तत्सर्वमीश्वरेणाऽधिष्ठितं व्याप्तं पूर्णं चाऽस्ति । विश्वस्मिन्नाक्षोदिष्ठमा च स्थविष्ठं सर्वमपि चराचरं नैकमपि वस्त्वस्ति विनाभूतमीश्वरेण । तेनाऽस्थि चर्मावयवविशिष्टं जडतत्त्वमिति स्वस्य परस्य वा न कस्यचिदपि शरीरमनादरणीयमुपेक्षणीयं वा । यतस्तेषामन्तः स्वयं भगवान् विराजते । तस्याऽधिष्ठानतया सर्वाण्यस्माकं शरीरिणां शरीराणि तत्र भगवतो मन्दिराणि एवाऽवगन्तव्यानि सन्ति । तेषामपमानोऽनादरश्च सत्यं भगवत्येव विद्रोहो विद्वेषो भवति । तत्राऽप्यस्माकं मनुष्याणां शरीराणां तु,-यद्यपि तानि स्वर्लोकयोग्यानि तैजसान्यातिवाहिकानि च नैव सन्ति, तथापि-मूल्यमन्यदेवाऽस्ति । यतोऽस्माभिरेतेषाम् (शरीराणाम्) एव बलेन कर्मयोगसाधना कर्तव्याऽस्ति । यच्छक्त्या भगवतो विराट्स्वरूपस्यैतस्य विश्वस्य, समाजस्य, राष्ट्रस्य, सर्वस्य विश्वप्राणिसमुदायस्य च सेवा कर्तव्याऽस्ति । अन्यथा कोऽर्थो मुधाऽस्माकं जन्मना केवलं भूभारायितेनाऽस्मिन् भारतभूभागे देवैरपि कर्मभूमित्वेन जन्मनोऽर्थे संप्रार्थ्यमाने ?

वर्षेषु भारतं श्रेष्ठं जम्बूद्वीपे विशेषतः ।
यतोऽस्ति कर्मभूरेषा भोगभूम्यस्ततोऽपराः ॥

तथाऽसीममहिममहितायां कर्मभूमौ, तत्राऽपि भारतवर्षे, तत्राऽपि चैतन्यविशेषविशिष्टायां मनुष्ययोनौ जन्मोपलब्धिः सत्यं तत्र भगवतोऽनुग्रहस्यैव महीयसः फलं भवति । तदेतादृशोऽमूल्यस्य नरजन्मनः काककुक्कुरवत्केवलमुदरपूरणायैवोपयोगः सीमातीताया एव मूर्खताया विज्ञापनं भवत्यस्माकम् । तस्यास्तु द्वे अनिवार्ये फले भवतः-

(१) "दुरन्तायाः कण्टकहिंसकतत्त्वपूरिताया भवाटव्या बम्भ्रमणम्
(२) तन्मूलम् शाश्वतं दुःखकष्टजालं च"

तदत्र कर्मभूमौ जन्मोपलब्धिः सत्यं स्वर्णावसर एवाऽस्त्यस्माकं कर्मयोगसाधनायाः । न चाऽन्तरेण कर्मयोगसाधनामन्योऽस्त्यात्मोद्धारमार्गो देहयन्त्रितस्याऽस्य जीवस्य-"नाऽन्यः पन्था विद्यतेऽयनाय ।" । तेन "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इति श्रौतमनुशासनं साकारयितुमनसां साधकानां कृते ज्ञानयोगभक्तियोगापेक्षया लोकसंग्रहायापवर्गाय च क्लृप्तोपकारत्वेन ख्यातनामा कर्मयोग एव महिमातिशयं विभर्ति । तेनैव कारणेन सृष्टिप्रपञ्चप्रपञ्चनचुञ्चोर्लोकेशस्य तत्र भगवतो हिरण्यगर्भस्याऽपि यो विशेषतः

प्रियो जातोऽस्ति । तेनाऽत्र सर्वैर्लोकद्वयस्यैव हितं कामयमानैर्बुभुत्सितव्यमेतदेवाऽस्ति, यत् धर्मसंस्थापनसरण्या विश्वव्यवस्थित्यै श्रौतं कर्मानुशासनमनुसरतामवतारिणां तेषां तेषां महापुरूषाणामपि सश्रद्धमनुष्ठेयः स कर्मयोगः कथङ्कारम् साध्यते ? कोऽस्ति च तस्येतिकर्तव्यताकलापः ? इति ।

कर्मयोगसाधनाया इतिकर्तव्यताकलापविषये कतिपया निष्ठाः सन्ति, याः साधकेन कार्यान्वयनाय सदा हृदि निधेया भवन्ति । तास्वस्ति प्रथमा निष्ठा- "सत्सङ्कल्पस्य" । "यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु" इति साधकेन भगवान् प्रार्थनीयः । यतो लोके यावन्त्यपि सर्वाभ्युदयैकारीणि कर्माणि भवन्ति, तानि सर्वाणि सत्सङ्कल्पस्यैव मनोव्यापारस्य शुभाः परिणतयो भवन्ति ।"

द्वितीया निष्ठाऽस्ति-"त्यागवृत्तेरनासक्तभावनायाश्च" । यतःकृत्स्नमेव सचराचरमिदं विश्वमीश्वरेण व्याप्तमस्ति । तेन विश्वस्य कणकणेषु तस्यैवेश्वरस्यैकाधिकारम् स्वामित्वमस्ति । तत्राऽधिकारलेशोऽपि नास्ति मनुष्यस्य । तस्मान्मनुष्यस्य यदपि वस्तु भोक्तव्यमस्ति तत्तेनेशकृपां स्मृत्वैव, त्यागभावनयैव भोक्तव्यं भवति । यच्च वाऽन्यद् ग्रहीतव्यं भवति, तदपीशकृपां स्मृत्वैव, त्यागभावनयैव ग्रहीतव्यं भवति । यावता साधनेन कर्मयोगसाधनाया उपकरणभूतस्याऽस्य देहस्य यात्रा चलति, तावतैव सन्तोष्टव्यम् । "बहूनि कर्माणि कृतवानस्मि । तेन मत्कृते फलेनाऽपि प्रभूतेनैव भाव्यमित्याकारा फलेच्छाऽऽसक्तिर्वा सर्वतोभावेन निषिद्धाऽस्ति कर्मयोगसाधनायाम् । यतः कर्मण्येवाऽधिकारोऽस्ति मनुष्याणां नैव फले । कर्मयोगं सिषाधयिषता साधकेन सर्वाणि कर्माणि कामसङ्कल्पवर्जमेवाऽनुष्ठेयानि केवलं कर्तव्यधियाऽना- सक्तभावनया च । इयमनासक्तिभावनैव हि कर्मयोगसाधनाया महती प्रक्रियाऽस्ति । यस्या गर्भतस्त्यागभावनायाः प्रसवो भवति ।अनासक्तिभावना, त्यागभावना चैते द्वे एव भावने कूरात्कर्मबन्धात् साधकान् मोचयतः ।"

तृतीया निष्ठाऽस्ति- "प्राणिमात्रेष्वात्मभावनायाः" । शरीरात्पृथगात्मतत्त्वस्य ज्ञानम्, अर्थात्- आत्मसाक्षात्कारम् मानवजन्मनः साफल्यं मन्यन्ते विद्वांसः । यत ईश्वरप्राप्तिमन्तरेण नाऽस्त्यन्तो दुःखानाम् । अन्तरेण चाऽऽत्मज्ञानम् नाऽलं जीव ईश्वरं प्राप्तुम् । आत्मज्ञानशून्यो जीवो न पुनर्मनुष्यजन्मनोऽधिकाराय कल्पते । तस्य त्वज्ञानान्धकाराच्छन्नायां पश्वादियोनावेव जन्माधिकारो भवति । तन्मानवजन्माधिकारी जीवो यत्प्राणिमात्रे स्वसत्ताम् स्वस्मिंश्च प्राणिमात्रस्य सत्तामनुभवति, तदेव हि शुद्धमात्मज्ञानं नाम । प्रातिभज्ञानबलात्क्षणं विद्युद्वत्स्फुरितेनाऽऽत्मज्ञानेन नैव

विश्वात्मैक्यज्ञानं साधितं भवति। तदर्थं तु आत्मज्ञानेन दिवाकरेणेव निरन्तरं हृदि प्रकाशमानेनैव भाव्यम्। "तत्त्वमसि" इति महावाक्ये तत्पदवाच्यम्, सर्ववस्तुभ्यः परतः स्थितं च यदस्ति परात्मतत्त्वम्, तदेव ह्यस्ति मुमुक्षूणां साधकानां ज्ञातव्यं प्राप्तव्यं च। यत्र साधकः 'त्वम्' इत्यस्य विलयनं कृत्वा परात्मनैकाकारः शाश्वतीं निर्वृतिं लभते। एवमात्मज्ञानमार्गपथिकः प्राणिमात्रेष्वात्मभाववान् साधको लोकव्यवहारेऽपि न केनचिदपि वस्तुना, व्यक्ति विशेषेण वोद्विजते, न च कस्यचिदपि स उद्वेगकारणं भवति"।

चतुर्थी निष्ठाऽस्ति-"गुणातीततायाः समदृष्टितायाश्च।" साधकेन गुणातीतभावेन जयपराजययोः, मानाऽपमानयोः, स्तुतिनिन्दयोः, सुखदुःखयोः, हर्षविषादयोः शत्रुमित्रयोः, आत्मीयपरकीययोः, साफल्याऽसाफल्ययोः, स्वर्णमृदोश्च समेन भवितव्यम्। तथैवौपाधिकम् जन्मकर्मजं भेदमपनीय गवि, शुनि, हस्तिनि, ब्राह्मणे, चण्डाले चैकात्म्यभावेन, समदर्शनेन च भाव्यम्।"

पञ्चमी निष्ठाऽस्ति-"धर्मयुद्धस्य"। कर्मयोगं सिषाधयिषुभिः स्वस्यैवान्तर्वर्तिभिः सबलैर्धर्मशत्रुभिः कामक्रोधादिभिस्तथा बहिर्वर्तिभिर्लोक-संग्रहविघातकैः सत्तत्त्वप्रतिपक्षैश्च निष्कामतयाऽनासक्तभावनया, जागरूकतया च सदा योद्धव्यं भवति।

किञ्च- राजत्वाय राजसूयेन, राजर्षित्वाय वाजपेयेन, समस्तविश्वशासनयोग्यत्वाय च सर्वमेधेन यजस्वेत्येवंप्रकारकेषु राजोचितेषूपदेशेषु दातव्येषु, कोऽयं यतिजनोचित उपदेशोऽसङ्ग त्यागादेः? अथवा प्रारब्धेषु, प्रारम्भणीयेषु, अपूर्णेषु, नित्यनैमित्तिकापातकर्तव्येषु चाऽसंख्यातेषु राज्यकार्येषु सदा वर्तमानेषु पुनस्तदतिरिक्तानाम् अननुष्ठितास्वपि प्रत्यवायहीनानाम् एतावतीनां विचारतरङ्गकल्पितानाम् निष्ठानां कर्तव्यत्वेन प्रदत्त एषोऽव्यावहारिकोऽराजोचितश्चोपदेशः कदा कार्ये परिणंस्यते? असमीक्ष्य वृथोपदेशमिषेण कियदसंभाव्यमनुपयुक्तं प्रलपत्येष द्विज इति प्रभुणा नैव वक्तव्यम्। मत्कथनेन नैव किमप्यधिकं कर्तव्यं प्रभोर्भवति। केवलं मनसा भावनीयमेव भवति। यत्क्रियते, यच्च करिष्यते तन्निष्कामभावेन, फलाकाङ्क्षात्यागेन, कर्तव्यधिया कर्तव्यमित्येवाऽगृह्णाति मम कर्मयोगोपदेशः। नैवाऽतिरिक्त कार्याय प्रेरयति। तथात्वे कर्मयोगस्यैका प्रमुखा भूमिका निर्व्यूढा भविष्यति। बहिर्दृष्टौ कर्मयोगी साधारणेन जनेन नैव भिद्यते। साधारणो जनो यत्करोति, कर्मयोग्यपि तदेव करोति। केवलं भावनायाम् पार्थक्यं भवति। एकः सकामतया, आसक्त्या, फलेच्छया, स्वार्थसिद्धये कर्म कुर्वन् भवति, अन्यस्तदेव कर्म निष्कामतया, अनासक्त्या फलाशात्यागेन, केवलं लोकसंग्रहधिया, कर्तव्यबुद्ध्या कुर्वन् भवति। यद्यपि द्वे अपि ते कर्मणी बहिः सरूपे एव दृश्येते।

परम् भावनाभेदेन ते पृथकपृथगेव फलं प्रदत्त:-एकं साधकान् कर्मबन्धान्मोचयति, अन्यत् तान् कर्मबन्धने पातयति । न च कर्मयोगनिर्वहणाय पर्वत एवोत्तोल्यो भवति । ईश्वरस्य धर्माधिकरणे कर्माणि भावनया मूल्याङ्कितानि भवन्ति, नो परिमाणेन लघुत्वस्य गुरूत्वस्य वा । विशालं क्व सार्वभौमं साम्राज्यम् ? क्व च क्षोदिष्ठं लघिष्ठं च लौहकारचर्मकारयो: कार्यम् ? परं देहयात्रानिर्वहणायैव स्वल्पातिस्वल्पं पारिश्रमिकमादाय कर्तव्यबुद्ध्याऽना-सक्तभावेन च जनसेवायै निरन्तरं वर्णाश्रमानुशासनप्रदत्तं कर्म कुर्वाणौ लौहकारचर्मकारौ (उपलक्षभूतौ) कर्मबन्धनान्मुक्तौ भवत: । स्वार्थधिया साम्राज्यं सञ्चालयन् जनसेवाभावनाशून्य आसक्तो नृपतिर्निबिडे कर्मबन्धने पतितो भवति । पाञ्चभौतिक देह पातमनु पूर्वौ तौ द्वौ स्वर्गाधिकारिणौ भवत: । पश्चिम: सार्वभौमोऽपि स नरकाधिकारी भवति । तदहं पुनरप्यागृह्णामि-भावनानिवन्धनैव भवति फलव्यवस्था, नो कर्मपरिमाण निबन्धना । कर्मयोगसाधनायै एतदेव ज्ञातव्यं भवति ।
महाराज ।

"संसारामयतप्तानां भेषजं भ रेव हि"

ऋते ज्ञानान्न मुक्ति:'

इति वेदं वेदमपि भक्तियोगज्ञानयोगापेक्षया लोकसंग्रहार्थमुपयोगितया ताभ्यामुपबृंहिते कर्मयोगपक्ष एवाऽस्मादृशां साधकानां प्रायो रुचिसद्भावाद्यद्यपि तदर्थमावश्यक: प्रकाशो विहित: । तथापि साधकानां कृतेऽत्रास्ति अन्योन्याश्रयदूषितमेकं ग्रन्थिसंकटम्-"अन्तरेणात्मशुद्धिमात्मसाक्षत्कारो न संभवति, तथैवाऽन्तरेणाऽत्मसाक्षात्कारम् च पूर्णतयाऽऽत्मशुद्धिर्न संभवति" इत्याकारकम् । यच्छमयितुं निर्बलस्य मानवात्मन: कृते नान्योऽस्ति मार्गो विनेश्वरीयामनुकम्पाम् । तेन साधकैरुक्त ग्रन्थिच्छेदाय सप्रणामं सप्रश्रयं च स एव चराचरपति: परामात्मा प्रार्थनीय:-

तमसो मा ज्योतिर्गमय ।

असतो मा सद् गमय ।

मृत्योर्मा अमृतं गमयेति ।

अत: महाराज । वहूनि कार्याणि श्रमं श्रममपि कर्तव्यान्येवेति नास्ति कश्चिदीश्वरीय आदेश: । तद्यथाशक्ति अर्थात् भगवतोऽन्तरात्मनोऽधिष्ठानं स्वं शरीरमप्यपीडयन्, केवलं निष्कामभावनयाऽनसक्तधिया च धनम् दरिद्रसात्कृत्य, हविर्दैवसात्कृत्य, एषणा: सर्वा धूलिसात्कृत्य, सर्वाणि राज्यकार्याणि राष्ट्रियस्वार्थसात्कृत्य, कृतं च तत्सर्वम् परमात्मने समर्प्य विजयताम्

महाराजः। तथा कृतेऽत्राऽभ्युदयो भवेत्, परत्र च शाश्वतं सुखम्" इत्येवं प्रोच्य विरमामि। जयोऽस्तु महाराज। भवतः सराज्याङ्गस्य।

स्वस्ति प्रजाभ्यः परिपालयन्ताम्
न्याय्येन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु नित्यम्
लोकाः समस्ताः सुखिनो भवन्तु॥
काले वर्षतु पर्जन्यः पृथिवी शस्यशालिनी।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः।
अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम्॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात्।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पये तत्॥
ॐ नमः शिवाय।



द्वादश्या दिनमासीत् । राजाज्ञया मन्त्रिण: प्रासादे समुपस्थिता आसन् । वार्ताप्रसङ्गे राजा मन्त्रिण: प्रावोचत्-"वृद्धो मन्त्री रघुवीरो यदुक्तवान्, तदुपपन्नमेव । सूक्ष्ममविमृश्य नैकमप्यक्षमुक्तं तेन । कुत: श्रीदामा विद्रोहचरितो भवेत् ? तथा ऽव्यावहारिक: ।"

प्रधानमन्त्री-'तेनो नैकमप्यक्षरम् वृथा भूतम्" ।

राजा साट्टहासं पुन: प्रोचे- "भोजने, तेमनव्यञ्जनादौ लवणस्य न्यूनभावेऽपि पुनर्लवणाधानम् निषिद्धमिति ब्रवीति" ।

तदाकर्ण्य सर्वे मन्त्रिण उद्गच्छन्तमुच्चं स्वरम् संरुध्य राजसंमानसंरक्षणधिया खण्डवस्त्रेण मुखविवरम् आच्छाद्य बलात् मन्दीकृत्य हास्यवेगम् हसन्त आसन् । ततो हासं हासं पुना राजाऽब्रवीत्-"तादृशो विरक्त: साधु: कुतो विद्रोही भवेत् ? वराक: । किं विप्रियं करोति स राज्यस्य ?"

राजा पुनस्तच्चरितं व्याकुर्वन् सहासमवोचत्- " रघुवीरपरामर्शानुसारम् श्रीदाम्न:परिवारो लब्धभोजनाच्छादनोपकरणो द्विचतुरान् मासान् सुखेन वर्तयेतेति यथोचितं कुप्यमकुप्यंच धनमुपस्करसहितं प्रासादत: प्रदत्तमासीत्, तद्वहनाय द्वौ भारवाहावपि अनुगमितावास्ताम् । परं तयोर्भारिकयोर्विवरणानुसारम् लोहपुरमुपेत्य श्रीदामा मार्गे गच्छतो: दीनेभ्यो दरिद्रेभ्यश्चाऽहूय प्रासादप्रदत्तं तत्सर्वं प्रादत्त, तथा प्रदानसमकालमेवाऽन्योऽपि कश्चिद् दीनस्तत्र समागत इति देयवस्त्वन्तराभावात् आत्मन: प्रावरणं च विमोच्य तस्मै प्रादात्, एवं स सर्वं वितीर्य, भारबाहौ च निवर्त्य, एकधौतमात्रपरिधानोऽर्धनग्नशरीर: स्वगृहमभि प्रस्थितश्च । अतोऽहं ब्रवीमि- तादृशो यतिस्वभावो जनो राज्ये स्वयं किं विद्रुह्येत्, कं वा विद्रोहयेत् ?"

मन्त्रिण:-" एतत्सर्वथैव युक्तं सत्यम् च यद् देवो निर्धारयति" ।

राजा पुन: साट्टहासमवोचत्- "सलवणे निर्लवणे च तेमनादौ समेन भवितव्यम्"- एवं तस्योपदेश: कस्मिन् समाजे ग्राह्यो भवेत् ? किम् प्रलपति विक्षिप्त इव स: ?"

मंत्री- धनेश्वरमिश्र:- "साधारणदृशा दुरवगम: स्तोकश्चित्तविक्षेपोऽप्याशङ्क्यतेऽस्य प्रवचनश्रवणात्तु" ।

अन्ये मन्त्रिण:-"विक्षिप्तचित्तस्तु स्यान्नवा, अव्यावहारिकस्तु अस्त्येव स: । कर्मणैव स्वयं प्रमाणितं तेन । नो चेत् कृष्णस्याऽति प्रिय: सखेति जनश्रुत्यनुसारम् तु कृष्णेनाऽयं कति वारान् आह्वातव्य: संगमनीयश्चाऽसीत्

श्रीदामा । परं तथा न श्रूयते, न दृश्यते जातुचिदपि । संभवेत्, तत्राऽप्येतेनैवाऽव्यावहारिकत्वादिना कारणेन भाव्यम्" ।

सशिरोधूननम् राजा प्रावोचत्-"आम्, सत्यम् । संभाव्यमेतत्" ।

परराष्ट्रमंत्री-"यदि तथा नाऽभविष्यत्, एवं स ग्रामे ग्रामे भ्रमं भ्रमं - प्रवक्तुं सदा लब्धावकाशोऽनियतव्यापारश्च नाऽभविष्यत् ।

गृहमन्त्री-"अन्यथा विश्वमेव स्वं कार्यक्षेत्रं मन्वानः, स्वस्य विक्रान्तेन कर्मजातेन विश्वमेव प्रभावयितुमुद्युञ्जानः कृष्ण आत्मनः परममित्रमेनं त्यक्त्वा कमन्यं कार्यकर्तारं विश्वसेदस्य देशस्य कृते ? अत्राऽप्यवश्यं स्युरेव च्छिद्रसूचका विश्वस्ताः स्वजनास्तस्याऽस्मत्प्रशासनेनाऽनासादिताः" ।

अन्ये मन्त्रिणः-"सत्यमेतत्" ।

एवं संलपत्सु तेषु दौवारिकः प्रविश्य साञ्जलिबन्धम् , सप्रणामम् प्रोवाच- "विजयतां महाराजः । प्रभो । वृद्धो मन्त्री रघुवीरभट्टाचार्यो द्वार्युपस्थितो देवर्शनं कामयते" ।

राजा-"शीघ्रं प्रवेशय । मयैवाऽहूतः सः"

इति तं दौवारिकम् विसृज्य राजा मन्त्रिणोऽपि प्रोवाच-"युष्माभिः सर्वैः वृद्धः स संमान्यः । किञ्च-"श्रीदामविषयकं संलापमनु युष्मानहं विस्रक्ष्यामि, तस्मै रहः समयदानाय, किमपि विवक्षेदिति"।

मन्त्रिणः- "यदादिशन्ति प्रभुचरणाः"।

ततः क्षणेनैव रघुवीरोऽन्तः प्रविश्य राजानं प्रणम्य प्रोवाच- "विजयताम् महाराजः"।

राजाऽपीषन्मस्तकनमनेन तत्प्रणतिं स्वीकुर्वन् ससमादरमुपवेशनाय तर्जन्यङ्गुलीसंज्ञया निकटस्थमेकमासनं निर्दिश्य सस्मितं तं प्रोवाच- "श्रीदामविषये त्वत्परामर्शानुसारमेव विहितं मया । तव पात्रविवेकेन तदुपयुक्त कर्तव्यपरामर्शेन चाऽहं मन्त्रिणश्चैते प्रभाविताः स्मः ।

रघुवीरः साञ्जलिबन्धं सस्मितं राज्ञे निवेदयामास- सेवकेऽस्ति महाननुग्रहः प्रभुचरणानाम्"।

ततो राजा प्रधानमन्त्रिणं सहासमवोचत्-"श्रीदाम्नो यथावृत्तं विवरणम्, ततसम्बन्धे मन्त्रिणां वैयक्तिकानि मन्तव्यानि च यानि सन्ति, तानि सर्वाण्यमुं श्रावय, यानि लिखितरूप एव सन्ति"।

प्रधानमन्त्री- "यदादिशन्ति प्रभुचरणाः" ।

ततः प्रधानमन्त्री मञ्जूषातो विवरणपुस्तिकां बहिर्निष्कास्य, तामुद्घाट्य, पञ्चषाणि पत्राणि परावर्त्य, लिखितप्रासङ्गिकविवरणानि पत्राणि पश्यन्, वाचयन् रघुवीरं श्रावयितुमारेभे ।

प्र. मन्त्री एवं लिखितं तत्सर्वं संश्राव्य, तदेव पुनः संक्षिप्य मौखिकरूपेण च रघुवीरमेवसश्रावयत्- "भवतः परामर्शानुसारम् हरिशयन्येकादशीदिने स श्रीदामा राजप्रासाद एव धार्मिकप्रवचनायाऽमन्त्रितः। ततः स्वयं प्रभुचरणैर्महाराज्ञ्या च साऽनुकम्पमाकर्णितं तस्य प्रवचनम्, तथा सहैव सामन्तैरस्माभिर्मन्त्रिगुरुपुरोहितैः प्रासादसेवकवर्गेण च । स्वप्रवचनक्रमे सोऽनेकानि अव्यावहारिकाणि निर्देशनान्यपि प्रादात् । तथाऽपि प्रवचनान्ते श्रद्धां प्रदर्श्यैव करुणासागरैः प्रभुचरणैरुदारतापूर्वकं कुप्यमकुप्यं च धनं प्रभूतमेव दत्त्वा, तद्वहनाय द्वौ भारवाहावपि तमनुगमय्य स ससम्मानं गृहाय विसृष्टः । परं मार्ग एव प्रासादप्रदत्तं तत्सर्वम् स्वमर्धजीर्णं प्रावरणं च दीनेभ्यः पथिकेभ्यः प्रदाय धौतमात्रपरिधानः स स्वगृहं प्रस्थित इत्युदन्तो मध्येमार्गं निवर्तिताभ्या मस्मद्भारिकाभ्यामस्मान् प्राप्तः । अतः पूर्वं तेन सहास्माकमपि निकटसंपर्कपरिचयौ नाऽस्ताम् । तथाविवरणलक्षितः स कथं विद्रोही भवेदिति यत्पूर्वं भवतोक्तमासीत्, तत्तस्यैवाऽचरितेन सत्यापितम्, सहैव साऽस्माकं पात्रापात्रविवेकत्रुटिश्च पूर्णतया प्रमाणिता । तेन स्वीयां तां त्रुटिं वयं स्वीकुर्मः, सहैव भवन्तं धन्यवादैः सभाजयामः ।"

रघुवीरः प्रहस्य मन्त्रिणः प्रोवाच- साधारणस्याऽस्य परामर्शस्य दानेनैव नाऽहमस्मि तथा धन्यवादार्हः । धन्यवादार्हास्तु भवन्त एव सन्ति । यतो भवन्तः श्रीदामानं नो गणयन्ति स्म । ईदृशा अगणितव्यक्तित्वा जनाः कतिपये राज्येन कार्यबाहुल्यजादनवधानात् भ्रमात् अन्यायेन बन्दीकृता अपि भवन्ति, भ्रमबाधकज्ञानोत्तरम् मोचिता अपि भवन्ति । यद्यप्येतादृशी स्थितिरवाच्या अपि भवति, परं राज्ये यदा कदा साऽऽपतत्येव, । निर्विष्टव्यैव भवति । एतत्साधारणमेव राज्यस्य । तथा राज्यव्यवस्थानुसारम् प्रचलित दण्डसंहितानुसारं च कर्मविशेषेण कोऽपि जनः प्रगृह्यते, संयम्यते, मुच्यते राज्यस्याऽयमपि साधारणो नियमः । परम् तादृशस्याऽगणितस्य साधारण जनस्य कृते बहुं समयं प्रदाय चिन्तयितुं, मन्त्रयितुं क्व भवत्यवकाशो राज्यस्य ? भवति ? भवन्तः वक्तुं शक्नुवन्ति ? परम् प्रशासनेन, अर्थात् भवद्भिरगणितस्य श्रीदाम्नः कृते राजसभायां चर्चोपचर्चा कारिता, राजा निवेदितः बाह्किकोऽहमपि परामर्शाय समाहूतः । एतेनाऽहं चित्रीये- एतावान् प्रयासस्तदर्थे किंप्रयोजनकः ? आस्तां तावदेतत् । परम् मम मते तु यथा भवन्तस्तं मन्यन्ते, तथा सः अगणीयव्यक्तित्वो जनो नाऽस्ति । न च केवलं गणनीयव्यक्तित्वः एव अपि तु असाधारणव्यक्तित्व एवाऽस्ति सः । यस्याऽचारविचारौ राज्येन सदा समीक्षणीयौ सावधानतया चिन्तनीयौ च स्तः । तदज्ञानेन, भ्रमेण, अथवाऽविदितेन केनाऽपि हेतुना एतादृशं व्यक्तित्वमगणयन्तोऽपि भवन्तो यच्चर्चायामानीतवन्तः,

तत्सम्बन्धे मह्यं परामर्शदानावसरं च यत्प्रत्तवन्तस्तदर्थे भवद्भ्यो धन्यवादान् समर्पये । तेनैव हेतुना भवन्तो धन्यवादार्हा नाहमिति मयोक्तम्। यतो भवतां लिखित प्रतिवेदनानुसारमपि तत्प्रवचनगतैर्भावबिन्दुभिस्तत्पश्चात् मार्गगतेन तत्त्यागपूर्णचरितेन च राज्यशासकैः सर्वथैव नोपेक्षणीयं तद्व्यक्तित्वमिति मद् धारणायाः प्रागपेक्षयाऽपि दृढीभावाद् भवद्भिः कारितस्तद्विषयकोऽयं विचारविमर्शो राष्ट्रस्य राज्ञो जनतायाश्च महीयसे कल्याणाय सुतरां सामयिक आवश्यकश्चास्तीति धन्यवादार्हः स्थानेऽस्ति भवतां प्रयासः ।

किञ्च- "अपर्याप्तलवणे तेमनादौ पुनर्लवणयोगो निषिद्ध इति प्रवचनम्, प्रासादतो यावत्प्राप्तं सर्वं वस्तु दरिद्रपथिकेभ्यः प्रदायाऽर्धनग्नस्थितौ गृहप्रस्थानम् चेत्येताभ्यां लक्षणाभ्यां स ईषद् विक्षिप्त इव, अकर्मण्य इव च प्रतिभाति" इत्येतद्विषयामस्मद्धारणामेतावद्वर्षपर्यन्तं कृष्णश्रीदाम्नोरसमागमः सत्यापयति द्रढयति चेति यदस्ति लिखिते मन्त्रिणां वैयक्तिकमन्तव्य प्रतिवेदने, तन्न युक्तम् ताभ्यां लक्षणाभ्यां तेन चाऽनुमानेन श्रीदाम्नो विक्षिप्तचित्तता नैव सिध्यति, प्रत्युत ते लक्षणे तस्याऽलौकिकताम्, महात्मताम्, इन्द्रियजयिताम् प्रकटयतः । कृष्णोपेक्षात्मकमनुमानं च विक्षिप्तचित्तताहेतोरेवाऽसिद्धत्वान्नाऽलं तमारोपं प्रमापयितुम् । अव्यावहारिकनिर्देशनस्य यो दोषारोपोऽस्ति, तमहं दोषारोपमेव न मन्ये, प्रत्युत यथार्थवादमेव मन्ये । तदव्यावहारिकता तु स्ववगमैवाऽस्ति तद्विपरीतवृत्तीनामस्माकम् । अस्माकं संमता व्यावहारिकता तत्संमता न भवति, अस्मत्संमता व्यावहारिकता तत्संमता न भवति । एतत्तु स्वाभाविकमेव । "यतो वयं सरागाः स विरागः, वयं सकामाः स निष्कामः, वयं सङ्ग्रहिणः सोऽसङ्ग्रहः, वयं स्वपरिवारार्थे चिन्तयामः स विश्वप्राणिसमुदायस्यार्थे चिन्तयति" इति पृथगेवाऽस्ति पन्था अस्माकं जीवनस्य तस्य जीवनस्य च । धर्मप्रवचनकार्यं तु मध्येतज्जीवनादर्शमेवाऽस्तीति सोऽत्राऽगतः, प्रवचनाय । परं लक्षरूप्यकाणि प्राप्स्यसेऽत्राऽगच्छेति लिखित्वा निमन्त्रिते, मन्ये स नाऽयास्यति । राजानं कञ्चिद् वाऽन्यं जनं प्रीणयितुं, मन्ये स क्वचिदपि नैव गमिष्यति । ईदृक्षाः साधका ईश्वरं, तत्प्राप्तिसाधनं कर्मयोगम्, तत्प्रक्रियां वाऽन्तरेण नैव काञ्चिदपि सत्तां शक्तिं वा गणयन्ति । ईदृक्षा महेच्छा व्यक्तित्वविशेषा निष्कामेन कर्मयोगपथेन गच्छन्तो मनुष्यसंख्यामतिवर्तन्ते , जीवन्ति च यशःशरीरेण यावदाभूतसंप्लवम् । तद्विपरीतमस्मादृक्षाः कीटा आत्मम्भरयः सीमितायाम् सत्तायाम्, शक्तौ, विभवे, यौवने च गर्वं गर्वं कालदंष्ट्रान्तर्गताः कियता समयेन हिमविलायं विलीयामहे । आत्मनः पौत्रैरपि अस्मरणीयां तमःसरणीमभि प्रतिष्ठामहे । तादृशा जना विक्षिप्तचित्ता भवन्तीति कथनम् स्वस्यैव विक्षिप्तचित्ततायाः, अज्ञानस्य वा

विज्ञापनं भवति । वरमस्माकं लौकिके साधारणे पथि स नास्तीत्येव कथनीयम् ।"

–यच्चोक्तं तत्र प्रतिवेदने– "एष कृष्णेनाऽकर्मण्य उपयोगानर्हश्चेति उपेक्षितोऽनाहूतश्चेति," तत्रोच्यते- हन्त ! उपर्येव प्लवन्ते भवन्तो राजनीत्युदन्वतः । किमेतन्न संभवेत् ? यत्- "कृष्णेनाऽसौ गोप्यकर्मसु नेयुक्तोऽस्त्यत्र । किन्तु भवतां प्रशासनं नैतज्ज्ञातुमलम् ।" एतदसंभवमिति भवन्तो प्रत्याख्यातुं शक्नुवन्ति ? यत ईदृक्षा एव हीनान्नवेषा साधारणदृशा अव्यवस्थिताः कार्ये जनैरविश्वसनीया जनास्तादृशे कर्मणि नियोज्यन्ते नीतिविचक्षणैः । वीतरागताप्रदर्शनेनैतादृशा जना अप्रतिहतगतयो जनैरविशङ्क्या यत्रतत्र चारत्वेन चरन्तो नियोक्तुः साध्यं साधयन्ति । अथवाऽस्यैव कर्मयोगनिष्ठया स्वस्य सैद्धान्तिकः प्रचारो वरीवृध्यमानोऽस्तीति कृष्णोऽमुनाऽतिमात्रं सन्तुष्टो भवेत् । स्वस्य प्रमुखे कार्ये (कर्मयागप्रचार) विघ्नो मा भूदिति भक्तवश्यः कृष्ण आत्मनो बहिश्चरं प्राणमिवैनं श्रीदामानमन्येषु क्षुद्रकार्येष्वीदृक्षेषु नैव नियुनक्ति ।"

मत्कथनस्य तात्पर्यमेतदेवाऽस्ति– श्रीदामा कृष्णोपेक्षितो नाऽभूत्, नो भवति, नो भविष्यति । तदनुमानं सर्वथा भ्रमपूर्णमस्ति । "तृणेन कार्यं भवतीश्वराणाम् किमङ्ग" विदेशे एतावज्ज्ञानवता, सुप्रसिद्धेनविचक्षणेन, स्वान्तरङ्गेण सखीभूतेन ! किं बहुना मत्कथनमेतत् समयः सत्यापयिष्यते । एतावदेवाऽस्ति मन्मन्तव्यं श्रीदामविषये ।

ततो राजः मन्त्रिणः प्रोवाच- "वृद्धस्यानुभविनश्चाऽस्य परामर्शो युष्माभिः समयसमये ग्राह्यः । सांप्रतमेतावदेवाऽस्तु । इतोऽहं क्षणं रघुवीरेण सह संलपामि, यूयं गच्छत स्वकार्याय" ।

"यदादिशन्ति प्रभुचरणाः" इत्युक्त्वा मन्त्रिणो राजानं प्रणम्य सभाकक्षान्निर्ययुः । तत एकान्ते रघुवीरो राजानं निवेदयामास-"महाराज ! राजनीतिः साधारणमनीषैर्जनैर्दुरवगमा, प्रतिभाचातुर्यप्रिया, सुमन्त्रसाध्या, समयापेक्षिणी, प्रयोगकौशलाश्रया, जनविश्वासशस्त्रसंरक्षिता, निगूढतत्त्वा, विविधवेषरूपा च भवति । नयकौशलपुरःसरम् साधु प्रयु ा राजनीतिरेव राष्ट्रम्, राजानम्, धर्मं, संस्कृतिं च संरक्ष्य सुखशान्तिसमृद्धिभिः प्रजा रञ्जयति । अध्यात्मसाधनायां राजनीतिसाधनायां च नैवाऽस्ति महदन्तरम् । द्वयोरप्येतयोः साधनयोःसाफल्यं जागर्तिसंयमगुप्तायां मन्त्रश ावेवाऽधारितं भवति। तिसृषु शक्तिषु प्रमुखत्वेन, कोशदण्डजतेजोरूपायाः प्रभुशक्तेः, वीर्यपराक्रमैधिततेजोरूपायाः उत्साहश श्च प्रभवत्वेनाऽपि मन्त्रशक्तेरेव बलेन राजा राज्यसञ्चालनसामर्थ्यं बिभर्ति । तेन मन्त्रशक्तेर्गोप्यतया संरक्षणं,

संवर्धनम् च राज्ञो राष्ट्रियं प्राथमिकं कर्तव्यं भवति । तस्या ह्रासस्य राष्ट्रविनाशस्य प्रमुखतमं कारणं भवति । किन्त्वत्राऽहं तदेवाऽशङ्कमानोऽस्मि- "अत्र मन्त्रशक्तिर्गोप्यतया संरक्षिता स्यान्नवेति" । तन्महाराज ! अद्य स्वानुभवान्तर्गतान् कतिपयान् परामर्शान् अहं निवेदयामि, गोप्यतया संरक्ष्य राष्ट्रहिताय स्थाने ते प्रयोक्तव्याः

(१) मन्त्रिभिरसंमन्त्र्य केवलमेकाकिनः स्वस्यैव मतेन न किमपि कार्यं कर्तव्यं राज्ञेति (सर्वविद्यासु कुशलो नृपो ह्यपि सुमन्त्रवित् । मन्त्रिभिस्तु विना मन्त्रं नैवाऽर्थं चिन्तयेत्सुधीः । सभ्याधिकारिप्रकृतिः सभासत्सुमते स्थितः । सर्वदा स्यान्नृपः प्राज्ञः स्वमते न कदाचन) सत्यपि शुक्राचार्यमते "कस्मिंश्चिदपि कार्यविधौ मन्त्रिणं मन्त्रेषु सत्स्वपि कार्यायाऽन्तिमनिर्णायकत्वं राज्ञैव निर्वोढव्यमिति (धृतेऽपि मन्त्रे मन्त्रज्ञैः स्वयं भूपो विचारयेत्) यन्मनोर्निर्देशनमस्ति, तदेवाऽतिव्यावहारिकं सदुदर्कं च भवति । यतोऽनुभवसिद्धं ह्येतत्- कस्मिंश्चिदपि विषये राज्ञा मन्त्रिभिः सहास्थाय स्वयं विचारविमर्शोऽर्थनिर्णयो वा न कर्तव्यः । तथा कृते सर्वे मंत्रिणो राज्ञो भावं, साहसं, प्रतिभाम्, उदारमनुदारं वा दृष्टिकोणम्, प्रियपक्षं विप्रियपक्षं च सर्वं गोप्यमवगच्छन्ति । तस्याऽधारे मन्त्रिपरिषदि पक्षविपक्षनिर्माणं भवति । पक्षविपक्षयोश्च शक्तिलाभाय प्रातिस्विक आग्रहो भवति । तेन तेषां मिथोऽपरागः, तन्मूलक एकताविनाशः, ततो राज्यकार्ये तदनेकतामूलको विघातश्चेत्येतादृशा अनर्थाः आपतन्ति । किञ्च बहिर्मन्त्रिणामपि मन्त्रिणां सम्भवात् तानि राज्यरहस्यानि राजाभिप्रायाश्च आराज्यमन्तरन्तः प्रचार्यन्ते । तेनैव द्वारेण विपक्षभूतानां शक्तिकामिनां मन्त्रिणां छिद्रेषु प्रजिहीर्षताम् पार्ष्णिग्राहाणाम् परचक्राणां च गुप्तमन्त्रणानां यातायातम् चलति, यद् राज्ये दुरायतिमामन्त्रयति । एवं मन्त्रशक्तेर्ह्रासो महाराज ! राज्यमचिरेण विप्लावयिष्यति ! तेन परामष्टव्ये विषये "यूयं संभूय परामृशयत" इति राज्ञा मन्त्रिण आदेष्टव्याः । ततो राज्ञा पृथक्पृथगेव तैः संपृच्छ्य, तेषामभिप्रायो ग्रहीतव्यः । तदनन्तरमेकान्ते स्थित्वा तेषां मतानि समीक्ष्य, विविच्य यत् समीचीनम् मन्यते, तस्य कार्यान्वयनायैवं कर्तव्यम् इति राज्ञा मन्त्रिपरिषद्यादेशः कर्तव्यः । राज्ञा स्वभावेङ्गितगुप्तये सदाऽऽकारगुप्तिमता भाव्यम् ।

(२) "कस्यचिदपि कस्मिंश्चिदपि विषये केनाऽप्येकेनैव दत्ते विवरणे विश्वासो नैव कर्तव्यः । "राजा मां न विश्वसिति" एवं ज्ञानं यथा न भवेत्, तथाऽन्यान्यैः परीक्षिते एव विवरणे विश्वासः कर्तव्यः । प्रायो जनवृत्तबोधार्थानि विवरणानि वैयक्तिकवैरप्रतिशोधनपराणि परचक्रप्रेरितोभयवैतनिकतत्त्वकल्पितानि, पदप्रतिष्ठाप्राप्तिप्रतिस्पर्धामिथ्याऽरोपितान्यपि भवितुं

शक्नुवन्ति । राज्ञाऽतिविश्वासः कस्मिंश्चिदपि नैव कर्तव्यः । अतिविश्वस्तैश्चारैः प्रत्तेऽपि विवरणे चारचक्षुषा राज्ञा पुनश्चारान्तरैः सुपरीक्ष्यैव वस्तु-स्थितिनिर्णयः कर्तव्यः । अत्रैवोदाहरणमस्ति - श्रीदामविषयकं विवरणम् केन प्रदत्तम् असमीक्ष्याऽपरीक्ष्यैव तदपि सत्यतयाऽवधारितम् । तस्यैवाऽधारेऽभूद् दण्डप्रदानमपि । तत् कियदशोभनं जातम् ? अस्थाने कृतो दण्डोऽतिमात्रमक्षेमङ्करो भवति राष्ट्रस्य राज्ञश्च ।"

(३) "प्रजारञ्जनमेव राज्ञो धर्मः । स एव यज्ञो व्रतम् सदाचारश्च तस्य । यः प्रजा रञ्जयति, स एवाऽन्वर्थो राजा । यस्मिन् राज्ये, यस्मिंश्च राजनि प्रजानां विरञ्जनं भवति, तत्र राज्यं राजा चैतौ शब्दौ नाममात्रपर्यवसिता वयवार्थशून्यावात्महीनौ रिक्तावत एव परिहसनीयौ च भवतः ।' परं राज्यश्रीरपि चञ्चलेव, सदोषेव स्तोकमपि प्रमादमक्षममाणा पक्षं पातयति, प्रतिपक्षं च परिष्वजते । तथात्वेऽपि क्षत्रियधर्मः पुनरुत्थातुमेव, तदर्थे विजयिनमाक्रान्तारं प्रत्याक्रमितुमेवोत्सहते, कामयते । तेन यदि दैवात् तथाऽनुकूल्यं भवेत् प्राग्रञ्जिताः प्रजाः पुनस्तमेव राजानं सिंहासने विराजयितुमुद्योक्ष्यन्ते । यतः पूर्वं प्रतिपक्षैर्हृतराज्या अपि पुनर्लोकसम्मतिबलेन प्रत्यावर्तितराज्या राजान इतिहासे बहुशः श्रूयन्ते । तत् वर्तमानसमये निष्कण्टकं निष्प्रत्यूहं च राज्यं विधित्सुना, विधौ प्रतिगामिन्यपि सति भविष्ये पुनरुत्तिष्ठासुना, पुनर्जिगीषुणा राज्ञा सदा प्रजारञ्जनायैव प्रयतितव्यम् । प्रजारञ्जनमाहात्म्यं विजानता स्वस्य प्राणायिता महिष्यपि परित्यक्ता राज्ञा दाशरथिना । ०- ।, प्रजाभक्तिं समर्जयितुं प्रजारञ्जनमेवैकं साधनमस्ति । महाराज ! एतदस्ति सदा हृदि निधेयम्- सैनिकानां रक्षिणां च समस्तशक्त्यपेक्षया प्रजाभक्तिः सहस्रगुणितां श ि धारयति । प्रजारञ्जनायैते द्वे कार्ये राज्ञे साहाय्यं प्रदत्तः-

(१) प्रतिवर्षं विद्वत्संमेलनम् विधाय तत्परामर्शेन राज्यं सञ्चालनीयम् ।

(२) "मुखं दृष्ट्वा न वै कार्यो राज्ञा न्यायः कदापि हि । न न्यायश्च परैः कार्यः स्वयमेव प्रकारयेत् ।" इति राज्ञा रामेण यदुक्तम् तदेवाऽनुसृत्य राज्ञा स्वयमेव न्यायः कार्यः, न परेण । तथात्वे प्रजानां शरीरं संपत्तिं चाऽन्यथयितुं कोऽपि नशक्नोति । यत्र राज्ये न्यायोऽस्ति, तत्र राजा पूज्यते, प्रजा रञ्जिता भवन्ति ।

महाराज ! कोषस्य, सैनिकस्य च प्रबन्धः कीदृशोऽस्ति ? तयोर्द्वयोर्महत्त्वं सर्वेषामपि राज्याङ्गानां महत्त्वान्यतिशेते । यथा शरीरं जीवेन, पोषकतत्वेन च ध्रियते, कार्यक्षमं च भवति, तथा राष्ट्रमपि सैनिकवर्गेण, कोषेण

च ध्रियते, कार्यक्षमं च भवति । तद्विषये बहु निवेदनीयमस्ति, तथात्वेऽपि तदस्त्विदानीम् । सांप्रतमन्यत् किञ्चिदात्ययिकं स्वशङ्कितं गोप्यं च रहसि निवेदयितुं समीहे । आज्ञापयन्तु प्रभुचरणाः" ।

राजा-"कथय कथय, विस्रब्धम् कथय" ।

रघुवीरः- "श्रीदामानं प्रकृत्य, मन्त्रिणो यत्कथितवन्तः, यच्च कृतवन्तः, तदेव वीक्ष्य शङ्कितेन मया प्रभोरग्रत एव वक्रोक्त्या धन्यवादान् समर्प्याऽक्षिप्तास्ते । यतो वर्तमानः प्रधानमन्त्री श्रीदामानमेकतोऽकर्मण्यो विक्षिप्तः इति न गणयति, अपवदति च । अन्यतस्तं कार्याकार्य विपर्यासेनाऽस्थाने दण्डयति, राज्यत एव बहुसमयव्ययेन तच्चर्चां वर्धयितुं मन्त्रिपरिषदि विचारयति, विमृश्यति, ततो राजानं निवेदयति, ततो बाहिकं, मादृक्षमपि जनमाहुय परामर्शायानुरूणद्धि ! कोऽस्त्यभिप्रायोऽत्र तस्य ? । एतदस्ति महत् शङ्कास्थानम् ।

(१) राजनीतिस्तु यथासंभवम् जनान्, मित्रीकर्तुमुपदिशति, नो प्रतिपक्षीकर्तुम् ! किमर्थ प्रयासं प्रयासं च तं श्रीदामानं स प्रतिपक्षीकुरुते ?

मित्रवान् साधयत्यर्थान् दुःसाध्यानपि वै यतः'- किमेतावदपि स न वेत्ति ? । श्रीदाम्नस्तथा नखमांसवन्मिलितो विश्वविख्यातपराक्रमः सखा कृष्णोऽस्ति, तादृशं श्रीदामानम् विनापराधं दण्डयन् स प्रधानमंत्री शशिनो व्यपदेशेन समुद्रं वशीकुर्वतष्टिट्टिभपक्षिणः कथां न वेत्ति ? ।

(२) 'बलीयसा हीनबलो विरोधं न भूतिकामो मनसाऽपि वाञ्छेत् इत्यादि नीतिं न जानाति सः ? । एतादृशं साधारणं नीतिज्ञानमपि नास्ति तस्य ? एवं राज्ञो हितमुपेक्ष्य कार्यं कुर्वन्तो मन्त्रिणः- "अमात्यव्यञ्जना राज्ञा दूष्यास्ते शत्रुसंज्ञिताः"- शुक्राचार्यमतेन शत्रव एव मन्यन्ते । तन्महाराज ! वेदं वेदमेवैष प्रभुचरणानामनिष्टं विधित्सत्येष इत्येवम् अहं शङ्के- "कश्चिदेष उभयवैतनिको भूत्वा कार्यं कुर्वन्नास्ति कच्चित् ? समयेन प्रभुचरणानापद्गर्ते निपात्य कमपि महान्तं स्वार्थं सिषाधयिषन्नस्त्येषः ? "

राजा-"त्वद्वचनेन सांप्रतमेव शङ्कास्थाने प्राप्तवानहम् । मदु षट्कर्णतां मा स्म गमः। "

रघुवीरः- "अहो ! कथं तथा भवेत् ! कृपयाऽहं वेद्मि तत् । उक्तं च

"अपि स्वल्पतरं कार्यं यद्भवेत् पृथिवीपतेः

तन्न वाच्यं सभामध्ये प्रोवाचेदं बृहस्पतिः"।

राजा- "मयाऽतिविश्वस्ताच्चारादेव प्राप्ता सूचनाऽऽसीत् । परं तदा तां नाऽहम् आपाततो व्यश्वसम् । सूचना सकृदेव प्राप्तैवमासीत् - "यदूनां प्रवरमन्त्रिण उद्धवस्याऽस्मत्प्रधानमन्त्रिणो दिवाकरत्रिपाठिनश्च मिथो गोप्यः

पत्राचारो भवतीति ।" इदानीमेवाऽहं निरणयम् - सा सूचना सत्यैवाऽसीत् । श्व एवैनम्, एनान् वा गलहस्तयिष्यामि मन्त्रिपरिषदः ।"

रघुवीरः- नो, नो, नो । संभ्रम्य तथा नकर्तव्यम् । बहूनि वर्षाणि पदमधिष्ठितो राज्यस्य सर्वाणि च्छिद्राणि जानानः स तथाकारं नैव गलहस्तयितव्यः । तेन सस्नेहविश्वासप्रदर्शनम् समयेन स्थानान्तरं प्रापणीयः । कृष्णस्य प्रियं सखायमातङ्क्य, ततः प्रकृतिप्रकोपमुद्भाव्य, वर्तमानां सत्तां विपर्यस्य, कृष्णसाहाय्यतः सत्तां हस्तयितुकामो दुराशयोऽयं तत्कालमेव गलहस्तयितव्यस्त्वासीदेव । परं राजनीतिरस्मानेवमनुशास्ति-

"न विश्वासं विना शत्रौ देवानामपि सिध्यति" ।

तेनाऽसौ विश्वास्यैव तथा पातनीयः, यथा प्रतिकर्तुं नो शक्नुयात् । तां योजनां निवध्याऽहं चरणेषु समर्पयिष्ये । अस्य कृते चिन्ता मा भूत् प्रभुचरणानाम् । महाराज । समाप्तं मम चरणेषु निवेदनीयमिदानीम् ।"

राजा-रघुवीर ! तव परामर्शेन महानुन्मेषो जातो ममाऽद्य राजनीतौ ।

रघुवीरः साञ्जलिबन्धं सस्मितं न्यवेदयत्- "एवमनुकम्पां प्रभुचरणानाम् निरन्तरम् शिरसा वहमानोऽस्मि !" ।



"श्रीदामानं राजाऽऽहूतवान् । अतः परम् तस्य शुभदिनानि उदितानि" इति विचारः सर्वेषु ग्रामग्रामान्तरवासिषु युगपदेवोदपद्यत । यतः सर्वपरिचितव्यक्तित्ववतः श्रीदाम्न उन्नत्यवनत्योर्जनचर्चितत्वं स्वाभाविकमेवाऽस्ति । नैतदप्यस्माकं तिरोहितम् यत्- त्रिकालावच्छेदेनाऽस्माकं स्वार्थैकदृष्टिर्जनसमाज ईदृक्षोऽस्ति, स उद्गमिष्यन्तमाशास्यतयाऽऽद्रियते, संपृणक्ति च । पतन्तं पतिष्यन्तं वाऽनाशास्यतया पराभवति, संपर्कादेव विरमति च । साम्प्रतं श्रीदामगृहे संपन्नानां ग्रामीणजनानाम्, तत्सहधर्मिणीनां वा गतागतमुत्तरोत्तरं वर्धमानमस्ति । इतः पूर्वमकिञ्चनस्य तस्य गृहे क एकमपि पदं निदध्यात् ?

सर्वप्रथमम् ग्रामभूमिपतेः पत्नी समागत्य रहसि सुशीलायै एकं नवं निचोलम् शाटीं च प्रददती प्रोवाच- "इतोऽत्र बहवो जनाः समागमिष्यन्ति । एतं नवं परिधाय वस । मम गृहकार्यमद्य बह्वस्ति । नाऽवकाशोऽस्ति सांप्रतम् अन्यसंलापस्य । गच्छामीदानीम्, पुनः पुनः समागमिष्यामि"।

एकाऽन्या समागत्य रहसि सुशीलां प्रोचे- "भगिनि ! रात्रिदिने इव सुदिनदुर्दिने अपि पर्यायेणैव भ्रमत इति यद्वृद्धानां कथनमासीत् तदनयोश्चक्षुषोः पुरतः कार्य एव परिणतमद्य ! वार्तामाकर्ण्य कियत्प्रहृष्टं मे मनः । समागतेषु भवतां सुदिनेषु, वयं स्मृतवन्तः स्मः - "अस्माकमेव सुदिनानि समायातानीति"।

अपरा प्रोचे- "पुराऽस्य गृहस्य दौर्गत्यम् वीक्ष्याऽस्माकं परिवार एव भूयो भूयो विदूयते स्म । अर्थाभावाद्यपि तदाऽस्मत्तः साहाय्यं न समभवत्, तत्त्वन्यत् । परं सांप्रतमनेन शुभोदन्तेन मम गृहे यावान्हर्षोल्लासोऽस्ति, तावानत्र भवद्गृहेऽपि न स्यात् । मत्स्वामी क्षणे क्षणे हर्षोन्मत्त इव प्रलपतीदानीम्-"पश्यताऽस्माकमपि सुदिनानि समायातानि" इति । स पुत्रानपि समाहूयैवं सान्त्वयति- अधीध्वं सम्यक्, कार्यावसरं प्राप्स्यध्वे । युष्माकं पितृव्यः श्रीदामा राज्ञा ससम्मानमाहूतः । अतः परम् चिन्तां मा स्म गमः । अस्माकं सुदिनान्यायातानि ।"

व्यवहारकुशलाऽन्या ग्रामाध्यक्षपत्नी सस्नेहप्रदर्शनम् प्रोवाच- "भगिनि सुशीले ! इतो नवानि सुदिनानि समायातानि । अतः परं श्रीदाममहोदयेन मिलितुं पुनः पुनरुच्चस्तरीया बहवो जना आगच्छेयुः । पुरा तथा स्थितिर्नाऽसीत् । यादृशेनाऽपि परिधानेन स्वस्य गृहस्थितिश्चलन्त्येवाऽसीत् । इतस्तु तथा न भवति । अन्येषां पुरतः सम्पन्नस्वच्छसुन्दरवसनया त्वया

भाव्यम् । अन्यथा स्वामिनः प्रतिष्ठाहानिः संभवेत् । तेनाऽस्मिन् समये साहाय्यदानमावश्यकं भवति । अहं ददाम्यपि, परं निःसङ्कोचं वद- वसनाभरणादेः क्रयाय कियद्धनं तवाऽवश्यकम् भवति । यदा शक्तिर्भवेत् तदा तदृणमपाकरणीयम् । स्थितिवशादशक्तौ , अनपाकृतेऽपि तस्मिन्, तन्नाहं याचिष्ये ।"

विधवा, अन्या चैका, मन्ये शुद्धेनैव हृदयेनाऽभ्यर्थिवती- "भगिनि ! भवन्तस्तु महाभागा देशस्य भाग्यविधातॄ राज्ञः क्रान्तिकारिणो महाप्राणस्य कृष्णस्य चाश्रये प्राप्तुं शक्नुवन्ति । अतो भवद्भिर्मम निष्पितृकस्यानाथस्य मम बालकस्य पुत्रस्य कृतेऽनुकम्पा कर्तव्या । आत्मीयः शक्तश्चाऽन्यो मम कोऽपि नाऽस्ति"

॰ पर्यायेण ग्रामस्त्रिय एवं नानावचोभङ्गीभिः सुशीलां रहसि प्रसादयितुमभ्यर्थयितुं चाऽरेभिरे । काचन गृहकर्मसहायिका भूत्वा गृहसंमार्जनेन, प्राङ्गणसंमार्जनेन, काचन गोधूमस्य पेषणेन, काचन तितउना तस्य पवनेन, काचन कूपतो जलानयनेन च तस्यामनुरागस्य, आत्मीयतायाश्च प्रदर्शनमकार्षुः । उपदिनावसानसमयम् तासु सर्वासु पर्यायशः स्वगृहेषु गतेषु, स्वापत्येषु च गृहप्रान्ते क्रीडैकपरायणेणु एकाकिनी सुशीला व्यचिन्तयत्- "एकान्ततोऽस्ति वातावरणम् नवमपरिचितं च । किं लिखितमस्ति ललाटे ? किं भविष्यति, कदा भविष्यति ?"

एवं तर्कयन्त्यामेव तस्याम् सुदामा धौतमात्रपरिधान एकाकी स्कन्धेऽवलम्बितप्रसेवो गृहमागतः । सुशीला चक्षुषी विस्फार्य तदागतमार्गमपश्यत्- "राजप्रत्तानि वस्तूनि वोढ्वा जनश्रुत्यनुसारम् द्वौ भारवाहौ पृष्ठतः समागच्छन्तौ भवेताम् नूनमिति"।

अभिमार्गं तथैकदृष्ट्या पश्यन्तीं सुशीलां श्रीदामाऽपृच्छत् - "किं पश्यन्त्यसि ततः ?"

सुशीला सस्मितं, समौनं प्रथमं स्वभर्तुश्चरणौ ववन्दे । तत्पश्चादपि द्विस्ततो निरीक्ष्य श्रीदामानं प्रत्यूचे - "जनश्रुत्यनुसारं तु द्वौ भारवाहौ अन्वागतौ भवेतामिति ततो दृष्टिमददाम्, परं नाऽपश्यम् कमपि ।"

श्रीदामा-"कीदृश्यासीज्जनश्रुतिः ?"

"राजा बहु धनम्, वस्त्राणि, भूषणानि चाऽददादिति, किं साऽसत्या निराधारैवाकसीत् ?"

"सा सत्यैवाऽसीत् । सदयो राजा यथो तत्सर्वं दत्तवानेवाऽसीत् "

"तर्हि कुत्राऽस्ति तत्सकलम् ?"

"मया तत्सर्वम् पथि निर्धनेभ्यः पथिकेभ्यो दत्तम्"

"किमर्थम् सर्वमेव दत्तम् ?"

श्रीदामा सस्मितम्, सुशीलाम् प्रबोधयन् प्रोवाच- "भद्रे ! द्वाभ्यां दृष्टिकोणाभ्यां मम तथा कर्तव्यं जातम्। तत्र प्रथमो "ब्राह्मणेन राज्ञः प्रतिग्रहो न ग्राहयः, गृहीत्वाऽपि गृहे न प्रवेष्टव्य" इति शास्त्रवचनेन गृहीतः, द्वितीयश्च दृष्टिकोणः 'अकिञ्चना जना यथाप्राप्तेन धनेन यथाशक्यं सेवितव्याः" इति च शास्त्रोपदेशात् गृहीतो मया"।

सुशीला-"अस्तु तत्तु तथा भूतम्, भवतोऽपि स्वं प्रावरणमासीत्। तत् क्व निहितमिदानीम् ?"

श्रीदामा-"तदपि प्रदत्तवानहं नग्नायैकस्मै दीनाय। किं करवाणि, राजप्रदत्तानां तेषां वस्तूनां वितरणोत्तरमेव पथ्यकस्मात् एको निर्धनो दयनीयमुखः समागत्याऽशया मन्मुखं द्रष्टुमारभत। तस्यां स्थितौ मया स्वं प्रावरणं तस्मै....। तस्याऽकिञ्चन्यं नग्नतां च द्रष्टुमेवाऽहं नाऽशकम्"।

सुशीला मलिनेन मुखेन प्रावोचत्- "तथा तस्य नग्नतां पश्यन् भवान् गृहे स्वबालकानामेवं नग्नताम् तु विस्मृतवान् तद्वितरणसमये ?"

श्रीदामा- "किं करवाणि स्मृत्वा ? तस्मिन्क्षणे तदेव करणीयं जातम् ! मा विषीद। भगवान् येन केनाऽपि प्रकारेण दिनानि यापयिष्यत्यस्माकम् !"

सुशीला विहस्य प्रोचे-"किं वदानि। भवत ईदृशमस्ति चरितम्। अत्र ग्रामेऽन्यदेवाऽस्ति नवं वातावरणम्, भवतो राजप्रासादगमनचर्योद्भूतम्। तेन सर्वा ग्रामीणनार्य इतोऽस्मदनुकूला बहुभिः प्रकारैः सहायिकाश्च भवन्त्यः सन्ति। मत्साहाय्याय कयाचिदत्राऽगत्य गृहं, प्राङ्गणं च संमार्जिते। कयाचित् गोधूमादिकं पिष्टम्। कयाचिदावश्यकवस्तुक्रयाय धनप्रदानाश्वासनं प्रदत्तम्। कयाचिन्नवो निचोलो, नवा बहुमूल्या शाटी च प्रदत्तौ। सांप्रतमेवं सर्वेऽस्माकं साहाय्याय सहयोगाय च प्रदर्शितचेष्टिता व्य भावाश्च सन्ति"।

श्रीदामा-"स्वार्थसाधनचतुरा व्यवहारकुशला जना ईदृशा एव भवन्ति, हृदयेन यद्येवं सर्वेषु जनेषु मिथः साहाय्यसहयोगयोर्नवो दृगुन्मेषोऽभविष्यत् तर्ह्येष एव भूलोकः स्वर्गवत्समृद्धोऽनन्तसौख्यमयश्चाऽभविष्यत्। विश्वस्मिन्नेवाऽस्मिन् समये धर्मक्षेत्रे, सामाजिकक्षेत्रे, राजनीतिकक्षेत्रे च सर्वत्र मिथ्याचारः स्वार्थाय सर्वान् प्रभावयन्, भ्रमयन्नस्ति। जनवञ्चनायाऽत्र धर्मोऽधर्मेण निर्दिष्टोऽस्ति। समाजोऽसामाजिकतत्त्वेन प्रभावितोऽस्ति। राजनीतिरराजनीतिकेन मूढतत्त्वेन सञ्चालिताऽस्ति। ईदृशा एव भवन्ति विरागोद्बोधकाः कृत्रिमाः स्नेहसौहार्दाभिनयाः संसारिणाम्।"

सुशीला:-"पुन: कदा गन्तव्यं भवति राजप्रासादे ?"

श्रीदामा-"यदाऽऽमन्त्रणं भवति"

सुशीला-"अत्र तु "भवान् प्रतिदिनम् अप्रतिहतगति: प्रासादे गच्छेत्" इति धारणाऽस्ति ग्रामवासिनाम् । यत्र गमनादेव, प्रवेशादेव प्रतिष्ठा भवेच्चेत् किं न गन्तव्यम् प्रतिदिनमपि ? स्वां कर्मनिष्ठाम् अपरित्यज्य, ? । किं विनामन्त्रणं तत्र गमनाय निषेधो भवति ?"

श्रीदामा-"अवसरोपसर्पणीया भवन्ति राजान:। तत्र गत्वा प्रासादं प्रेक्ष्य निवर्तनेन किं भवति ? युष्मादृशो जनास्तत्त्वार्थं नो जानीथ । श्रृणु- राज्ञ आमन्त्रणायां तु शिष्टाचारनिर्वहणायाऽपि गन्तव्यमेव भवति, तद्वर्जम् स्वेच्छया तु कस्य वस्तुन आश्रयोपसर्पणीयो राजाऽस्माकम् कृते ? तेन प्रदत्तं वस्तुजातम् एकतो ग्राह्यमेव न भवति प्रत्यवायभयेन, अन्यतो लोभवशात् जिघृक्षितेऽपि तत् सर्वम् स्वाप्निकं वस्त्विव क्षणिकं विनश्वरं च भवति । गृहं ददाति, तज्जीर्यते, भज्यते । धनं ददाति, मुष्यते, व्ययीभवति । व्ययेऽप्यक्रियमाणे तस्य वैयर्थ्यमेव भवति । भूषणं ददाति, तत् परिक्षीयते, शनैः शनैः परिसमाप्यते च । केभ्योऽप्येतेभ्य: स्वर्गारोहणाय सोपाननिर्माणं नैव भवति । तादृशो नाशवतो वस्तुन: कृते को विचारवान् मनीषी सर्वशक्तिमन्तं स्वमात्मानं राज्ञाम्, अन्येषां धनिनां वाऽग्रत: पातयेदवनमयेच्च ?"

एवं संलपतोस्तयोर्द्वौ सर्वकारकर्मचारिणावेकश्च कृषक: श्रीदामानं दृष्टुं समागता: । मिथ: कुशलप्रश्नानन्तरं श्रीदामा तान् प्रोवाच-'कोऽस्ति विशेष: ? "

तन्मध्यत एक: कर्मचारी प्रत्यवोचत्- "स्वास्थ्यकारणात् पञ्चषदिनार्थं गृहीतावकाश: कार्यालये नाऽगच्छम् । तेन समयस्य सदुपयोक्तुकाम्यया भवद्दर्शनायाऽत्र समागतोऽस्ति । कर्मचारित्वेनैव जीवनयापनं भवदस्ति । तेन चेखिद्यते चेत:।"

श्रीदामा-"किमर्थम् चेखिद्यते भवच्चेत: ?"

"जीवने किञ्चित् करणीयम् आसीत् । तत् किञ्चिदपि न जातम्"

"तर्हि किं कर्तुमना भवान् ?"

"भवतामनुगमनम् कर्तव्यमासीन्"

"कस्मै निमित्ताय ?"

"कर्मयोगसाधनायै"

"भ्रात: कर्मयोगसाधनायै मादृशामनुगमनमावश्यकम् नास्ति । एतावदेवाऽवदधातु यद्यत् कर्म भवान् कुर्वन्नस्ति, तत्सर्वमत: परम्

निष्कामतयाऽनासक्तभावनया च भवान् करोतु । कृतं च तत् परात्मने समर्पयतु । अनयैव विधया कर्मयोगसाधना भवेत् न कस्यचित् विदुषः, संन्यासिनो वाऽनुगमनेन ।"

कर्मचारी- "तावान् कर्मयोगोपदेशः संक्षिप्तैः स्वल्पैरेव शब्दैः सद्य एव बोधितोऽहं भवता ! यद्यहमत्र नाऽगमिष्यम् एवममृतोपदेशम् कुतोऽध्यगमिष्यम् ? ईदृशस्यैवोपदेशस्य कृते भवादृशाः पुण्यश्लोकाः स्मर्यन्ते, प्राक्तनपुण्यशेषेण सङ्गम्यन्ते च"।

तन्मध्ये कृषकः श्रीदाम्नः पत्नीं प्रोवाच- "कियानस्ति उष्णिमाऽद्यतनस्याऽतपस्य ? तेन पुनः पुनस्तृषा बाधतेऽद्य । स्तोकं जलं प्राप्नवानि ?"

हसन् श्रीदामा प्रत्यूचे- "किमर्थं जलमपि स्तोकमिति याचते भवान् ? जलं तूदरपूरमेव दातुं शक्यते ।" "दधितक्रयोः सत्वे जलसत्ता, (दधितक्रयोः) तयोरभावे जलाभावः इति दार्शनिको नियमस्त्वत्र नाऽस्ति । अभावेऽपि दधितक्रयोर्जलस्य तु सद्भाव एवाऽस्ति मम गृहे"।

तच्छ्रुत्वा सर्वे तेऽहसन् । ततो द्वितीयः कर्मचारी तमेव प्रसङ्गम् वितन्वन् श्रीदामानमपृच्छत्- "गौर्महिषी वा क्षीरिणी किं नाकस्त्यत्र गृहे सांप्रतम् ?"

श्रीदामा-"किं भवान् मां नैव परिचिनोति ? ममाऽकिञ्चन्यमेवं विश्रुतमपि तिरोहितं भवतामद्यावध्यपि ? गोमहिषीपालनमर्थसामर्थ्यं कुतोऽस्माकमपरिग्रहाणाम् ।"

प्रथमः कर्मचारी - "तर्ह्येतत्तु नैव समीचीनम् । अशक्यश्रवणंह्येतत् भवादृशां गेहे एका क्षीरिणी गौर्महिषी वाऽपरिहार्यैव भवेत् । काममभ्यागतानां कृते माऽस्तु, एतेषां बालकानां, भवत एव वा कृतेऽपि गृहे दुग्धं नास्तीत्येतदपि क्वचिद् भवति श्रवणार्हम् ? तर्हि मम गृहे साम्प्रतमपि तिस्रो गावः क्षीरिण्य एव सन्ति । तास्वेकामचण्डीं गां श्वोऽत्राऽनीय बन्द्धाऽस्मि, नैतदन्यथा भविष्यति । अस्मिन् वयसि, एवं बहु विधकार्यश्रमे दुग्धमन्तरेण कथं भवत्स्वास्थ्यम् रक्षितं भवेत् ?"

तस्य तां प्रतिज्ञां श्रुत्वा परमहर्षिता बालका प्रधाव्य, गृहं प्रविश्य मातरमुच्चैः प्रोचुः - "मातः ! श्वोऽस्माकं गृहे गामानयन्ति, गामानयन्ति, गा .....मानय.......इति"

सुशीला हस्तसंज्ञया तान् निवारयन्ती मन्दस्वरेण प्रोवाच - "किं वदेयुस्ते ? मौनमातिष्ठत ।"

तस्य तां गवानयनप्रतिज्ञामाकर्ण्य श्रीदामाऽवोचत् - भ्रात: जानाम्यहं दुग्धं बल्यम्, तर्पणं प्रीणनं च भवतीति । परं भवतैवैतानि कार्याणि सद्य: कर्तव्यानि, यदि भवानत्र स्वां गामानिनीषति । तथात्व एवाऽत्र गौ: पाल्यते -

(१) "एकं गोष्ठं त्वरयैव निर्मातव्यम् सर्वप्रथमं गोबन्धनाय,

(२) गवार्थे घासकर्तनम्, गोमयगोमूत्रादिक्षेपणम्, तस्याश्चारणम् इत्यादि कर्तव्यं भवति, तदर्थ एको गोसेवको भृत्यो नियोक्तव्य :,

(३) तस्य भृत्यस्यार्थे भोजनपरिधानवेतनानां प्रबन्धोऽपि भवतैव कर्तव्य: । किमद्य को मे परिवारस्तदर्थेऽतिरिक्तं व्ययभारं वोढुं वाऽलम् । एतावत्सर्व संभवति भवत्त: ?

तच्छ्रुत्वा सर्वेऽहसन् । अन्ते स कर्मचारी सविनयं श्रीदामानं प्रोवाच "साम्प्रतमहं शिक्षामन्त्रालये शाखाधिकृतपदे कार्यरतोऽस्मि । अतिरिक्तानामावश्यकानां वस्तूनां कृते तु किं वक्तव्यम्, तत्रत्येन वेतनेन साधारण: सायंप्रातिकव्ययनिर्वाहोऽपि न भवति । तेन भवतोऽनुग्रहादहं तत: करकार्यालये सर्तुमिच्छामि । भवत: साकल्यानुरोधे सति कार्यमेतदर्थमन्त्रितो भवति ।"

श्रीदामा विहसन् प्रोवाच - "महाशय । भवानेकत: कर्मयोगसाधनाया इच्छामपि व्यनक्ति । अन्यतो यथाप्राप्तेनाऽर्थेनाऽसन्तुष्ट: कार्यालयान्तरं यथाशीघ्रं जिगमिषति च । मिथो विरुद्धे एते भवतोऽभीप्सिते ।

एतदाकर्ण्य पुनस्ते सर्वेऽहसन् । "अनेन वराकेण केवलं स्वकार्यसाधनायैव कर्मयोगसाधनाभिरुचि: प्रदर्शिता, गवानयनप्रतिज्ञा च कृता" इति मनसिकृत्य श्रीदामाऽपि मनसा जहास, तमुवाच च- लिखित्वा ददामि, मत्पत्रं प्रापयत्वर्थमन्त्रिणं भवान् । कार्यं भवेत्" ।

सुशीला-"कियान्प्रभावो राज्ञः, येनाऽहूतमात्रो भवान् सर्वेषां ग्रामीणानामेवं भविष्याशाजनकः सञ्जातः" इति विस्मयेऽहम् तत्स्मारं स्मारम् !"

श्रीदामा- तवाऽयं विस्मयोऽज्ञानमूलकोऽस्ति। सचेतनो जनः को राज्ञः प्रभावं वीक्ष्य विस्मयेत ? राज्ञः प्रभावस्तु स्वाभाविक एव भवति। यतो व्यावहारिकदृष्टौ राजा सर्वानतिशेते। तस्य महत्ताया, गुरुतायाः, शक्तेश्चैकां कलामपि कोऽन्यः प्राप्तुं शक्नोति ? यस्य प्रसादेऽकिञ्चनोऽपि क्षणेन कोटीपतिर्भवति, यस्य प्रातिकूल्ये कोटीपतिरपि सद्य आकिञ्चन्यं प्रयाति। व्यावहारिक जगति, गृहस्थानां कृते राजा, राज्ञ आसन्नाः प्रिया व्यक्तिविशेषाश्च महन्मूल्यं बिभ्रति। राजपुरूषैर्यथासंभवम् को वैरायते ? तेभ्यः सर्वे बिभ्यति। इत्यादिभिबहुभिर्दृष्टिकोणै राजा पूज्यते, सहैव राजपुरूषाश्च।"

सुशीला-"तथा राजसंपर्कस्तु भवताऽपि कर्तव्यो जातः। अन्यथा गृहस्थितिः कथं सुध्रियते, एतेषां बालकानाम् च कथं संरक्षणं, संवर्धनं च भवति ?"

श्रीदामा-"विरम, मौनमातिष्ठ। तथा सकृत्कृतेन राजसंपर्केण तु मम दिनचर्यायाम् कियान् विघातः कृतः स्वार्थिजनसंपर्को बृद्धिं गतोऽस्ति। समये क्व मम ध्यानम्, क्व समाधिः ? क्व गतानि तानि स्वोपन्यस्तानि सार्वजनिकानि रचनात्मकसेवाकार्याणि ? तेन कथं स्वां नित्यनिष्ठां संरक्षेयमित्येवाऽस्ति मे चिन्ताऽधुना।"

सुशीला-"भवतः स्वनिष्ठासंरक्षणाय चिन्ता, मम तु सायंप्रातः स्वापत्यानि कथं भोजयेयम्, पाययेयम् एवमेवाऽस्ति चिन्ता ! । एतदर्थे "स्वां निष्ठां विहन्तु, विच्छिनत्तु भवान्" इति वक्तुमपि न शक्नोमि, समस्यासमाधानाय कञ्चिन्मार्गमासादयितुमपि न शक्नोमि। प्रासादतो याऽऽशा गृहीताऽऽसीत्, साऽपि भवन्निष्ठयैव निर्मूलिता। अथ कोऽस्तिमार्गोऽन्यः समस्यासमाधानाय ?"

एवं कथयन्त्येव सुशीला दृष्टोपायेव, लब्धमार्गेव, प्रसन्ना लोचने विस्फार्य श्रीदामानं ससंभ्रमं प्रोवाच-"आम्, भाग्येनैतं मार्गमस्मरमिदानीमेव, यत् -ग्रामीणनारीणां सङ्गमक्रमे तासामन्तिमैका मां कथयति स्म-"भवन्तस्तु महाभागा एकतो राज्ञः, अन्यतो विश्वैकमहापुरूषस्य कृष्णस्य चाऽश्रयं लब्धुं शक्नुवन्तीति"। तत् समीचीनं कृतं तया कृष्णं समये संस्मार्य। तद्भवान् त्वरितमेव द्वारकाम् गच्छतु कृष्णं स्वं परममित्रं द्रष्टुम्। एतादृशे विधुरे

समुपस्थितेऽपि स्वं परममित्रं कृष्णं न स्मरति चेत् कदा किमर्थं वा तं स्मरति भवान् ? तद् गम्यतां श्वः प्रातस्तरामेव । सर्वशक्तिमतस्तस्य कृष्णस्यपुरतः स्वगृहस्थितिदर्शनाय नैव भवता स्तोकमपि लज्जितव्यम् । यद्येतेषां बालकानां बन्धनं नाऽभविष्यत्, तर्हि सार्धमेव भवताऽहमप्यगमिष्यम् स्वगृहस्थितिं करामलकवदबोधयिष्यम् च । किं करवाणि, भवानेवैकाकी गच्छति । तत्राऽपि भवतो महात्मता, निःस्पृहता चाऽग्रेसरेतामेव । चिन्तात्वियमेवाऽस्ति । सर्वतोभावेन तथा नैव, नैव, नैव कर्तव्यम् । तत्र प्राप्याऽपि यदि तादृशः प्रमादः क्रियेत, तर्ह्यस्माकमाविश्वं नैव कुतोऽपि त्राणं संभवेदिति सत्यतया मनसाऽवधार्यम् ।"

श्रीदामा-"त्वमस्मारयः कृष्णम् । समीचीनम् जातम् । भूयान् समयो गतः, गुरुकुलान्निवृत्तयोरावयोर्नैव क्वचित्पुनः सङ्गमो जातः । तत्तेन मिलनाय महत्येवाऽस्तीच्छा ममापि । तदवश्यमेव प्रस्थास्ये श्वः प्रातस्तरामेव तद्दर्शनाय ।"

"परमेतदवदधातु भवान्"- तीक्ष्णेन स्वरेण, हठेनाग्रहेण च सुशीला पतिं प्रोवाच- "शोच्यामीदृशीं गृहस्थितिं विस्मृत्य केवलं तेन सञ्जिगमिषां पूरयितुं भवान् जिगमिषति चेत्, मार्गो दीर्घोऽस्ति, एवं ललाटन्तपो निदाघोऽस्ति, तद् गमनं केवलं दुःखाय, क्लेशाय भवति । नाऽस्त्येवाऽन्यः कोऽपि लाभस्तेन मुधा गमनेन । कच्चिन्न्यदधाद्भवान् ममाभिप्रायं स्वहृदि ?"

श्रीदामा विहस्य प्रोवाच- "भद्रे ! न्यदधाम्, नैव विस्मरामि"

सुशीला-किञ्च- अन्यदहमस्मरम् किं रिक्तेनैव हस्तेन तेन सङ्गच्छते भवान् ? किञ्चिदुपायनं नैव नेयम् ?"

श्रीदामा-"साधु साधु ! समीचीनम् स्मृतं त्वया ! परं किं नेतव्यम् ?"

सुशीला-"सांप्रतमेतावत्यो ग्रामनार्यः सहायिकाः सन्ति ! कथ्यताम् - किमुपकल्पनीयम् ? केन वस्तुना स प्रभावितो भवेत् ?"

श्रीदामा- "भद्रे । अनभिज्ञा त्वम् यशसा महसा च शोभनस्य, विक्रान्तस्य च तस्य व्यक्तित्वस्य । पर्वतोच्चै रत्नसुवर्णोच्चयैरपि स न तथा प्रभावयितुं शक्यते । तेनोपायनाय पृथुकप्रसृतिद्वयम् उपकल्पनीयम् । यतः स स्पृहयत्यतीव पृथुकाय । पृथुकशब्दश्रवणेनैव त्वं मा विहस । अत्र महद्रहस्यमस्ति । तच्चेदानीं परत एवाऽस्ताम् । सांप्रतं पृथुकोपहरणस्य तात्पर्यम् तत्प्रियवस्तुनः समादरः स्मरणं वा भवतु ! मन्ये- अनेनोपायनेन कृष्णो यथा सन्तुष्येत्, न तथा विश्वस्य समग्राणां रत्नानां राशिभिरपि । तत्तदेवोपकल्पय, तथा गमनाय यानार्थे भाटकादिकं च ! "

सुशीला-"उपहृतस्य पृथुकस्य रहस्यं भवान् जानीते, कृष्णो जानीते, संभवेत् अन्येऽपि विद्वांसोऽपि जानीरन्। परम् कृष्णस्य प्रासादेऽसंख्यातानाम् महिषीणां, दासदासीनां च योऽस्ति महान् वर्गः सोऽपि ज्ञातुं शक्नोति तद्रहस्यम्। तेषामग्रतः पृथुकप्रसृतिद्वयम् कथं भवान् उपायनत्वेन प्रदर्शयितुं शक्ष्यति ? न परिहसेयुः ?"

श्रीदामा- "राजानो महान्तः प्रतिष्ठिता जनाश्च प्रायः उपायनप्रिया भवन्ति। तानुपगच्छन्तः संबन्धिनः सेवका भक्ता मित्राणि च तेषां प्रियं वस्तु किमपि नीत्वा तानुपहरन्ति। ते च स्नेहेन भक्त्या, श्रद्धया, प्रेम्णा वा तैरुपहृतं तत् बहु मन्यन्ते। सैषा परम्परा पुराकालादेव प्रचलिताऽद्याऽपि प्रचलन्त्येवाऽस्ति" इति त्वं कथं न जानीषे ? एतद्वर्जमत्राऽन्यदपि रहस्यमस्ति, तत्प्रत्यागत्यैव व्याख्यास्यामि, यदि तदा त्वं जिज्ञासिष्यसे !"

सुशीला-"आस्ताम्, पृथुकस्यैवोपहाराय निर्णयो जातः। स च पृथुकोऽनदीजातिकस्यैव धान्यस्य स्वादिष्ठो भवति।"

श्रीदामा- "तर्हि कुत आनेष्यसि तत् ?"

सुशीला सस्मितं प्रोचे- "तत एवाऽनयिष्ये, यस्य गृहे स्यात्। सांप्रतं तु ग्रामे सर्वेषां गृहाणि मम कोषायितानि, कल्पवृक्षायितानि च सन्ति"।

श्रीदामा विहस्य प्रोचे- "चिरेणेदानीं त्वं समाजं पर्यचिनोः। कालेनाऽनयैव विधया मायाविलासोऽयं समस्तः संसारस्त्वया परिचेतव्यः।"

सुशीला-"आम्, सम्यगेव पर्यचिनवमद्यागत्य। अयं दीनो, दरिद्रो दुःखितोऽस्तीति नैवाऽत्र समाजस्य कश्चित्सेव्यो दयनीयो वाऽस्ति। यः शक्त्या, धनेन च ख्यातो विशिष्टश्चाऽस्ति, स एव सेव्यो नमस्यश्च भवति समाजस्य। शक्तिरेव, धनमेव वा सर्वान् मानवीयान् गुणान् अतिशेते। यत्र शक्तिधनयोरेकतरमपि नाऽस्ति, तत्र न केषाञ्चिदपि सेवाप्रदर्शनानि दृश्यन्ते, न वा कर्णमधुराश्चाटूकाराः श्रूयन्ते !"



अन्येद्युः श्रीदामोपहाराय पृथुकप्रसृतिद्वयं प्रसेवान्तर्निधाय कृष्णं दिदृक्षुर्द्वारकामभि प्रतस्थे । तस्मिन्नेव दिने श्रीदामानं द्रष्टुं सुशीलायाः पिता रविदत्तोऽभ्यागतः । तं दृष्ट्वैव बालकाः "मातामह आगतः, अस्मन्मातामह आगतः" इति हर्षेणोच्चैः शब्दायमाना ननृतुस्तं परिवेष्टयामासुश्च । तदाकर्ण्य सुशीला बहिर्निरगच्छत् ततः सा पितरं वीक्ष्य, प्रहृष्य, नमस्कृत्य, कटम् आस्तीर्य, तत्र तमुपवेश्य मातृकुलस्य कुशलं पप्रच्छ । आकर्ण्य कुशलोदन्तं प्रससाद च । रविदत्तः स्वप्रसेवतो निःसार्य प्रत्येकं बालकानां हस्तेषु एकैकं नागरङ्गफलं न्यधत्त, ततः प्रसेवमेव दुहित्रे प्रादत्त । रविदत्तोऽप्यत्रत्यां कुशलवार्तामाकर्ण्य सानन्दः सुशीलां प्रोवाच- "जामाता राजधानीतो न्यवर्ततेति श्रुत्वा 'कोऽस्ति विशेषः' इति बुभुत्सयाऽऽगतोऽस्म्यद्य । परम् न पश्याम्यत्र तत्र भवन्तम् ।"

सुशीला-"भवतो जामाता तु वासुदेवं कृष्णं द्रष्टुम् द्वारकामभि प्रस्थितोऽद्य प्रातस्तरामेव । भवत एतदागमनं संभावितं नाऽस्माभिः । यदि कुतोऽप्येषा सूचनाऽभविष्यत्, तर्हि स द्वारकाऽर्थे प्रस्थानमद्य नाऽकरिष्यत् ।

रविदत्तः- "राजसंपर्कः कीदृशो जातः । जामातृमहोदयस्तत्र किं विधाय निवृत्तः ?"

सुशीला सहासं प्रत्यूचे- "कः शक्नोति भवतो जामातुश्चरितं वर्णयितुम् ?"

रविदत्तः-"किमर्थम् ?"

सुशीला-"यथार्थम् तद्विवरणमिदमस्ति- स राज्याङ्गप्रमुखः सपरिजनश्च राजा सश्रद्धं विधिवच्च भवज्जामातुर्धर्मप्रवचनमाकर्णयामास । समाप्ते प्रवचनकार्यक्रमे प्रभूतेन धनेन, वसनाभरणादिना च यथार्हं सत्कृत्य, भारवाहद्वयम् अनुगमय्य राज्ञा भवज्जामाता गृहाय विसृष्टः। भारवाहद्वयेनाऽनुगम्यमानः स गृहं प्रस्थितो मार्गे राजप्रदत्तं तत्सर्वम्, स्वपरिहितमर्धजीर्णं प्रावरणं चाऽकिञ्चनेभ्यः पथिकेभ्यः प्रदाय तौ भारवाहौ च मार्गान्निवर्त्य धौतमात्रैकपरिधानो गृहमागतः । राजप्रदत्तानां वस्तूनां प्रागेवाऽत्र कर्णाकर्णिकया प्रचारात्तेषामुपभोगायाऽहमाशासानाऽप्यासम् । पश्चात्तन्मुखादेव यथावृत्तमवबुध्याऽश्चर्यं निराशां च युगपदेव प्राप्नवम् । किञ्च- एवं स्थितेऽहं पृष्टवती-"मार्गेऽन्येभ्यो दानसमये स्वगृहस्य स्वापत्यानां च दुःस्थितिमेकान्तत एव व्यस्मार्षीद्भवान् ? इति"।

स प्रत्युवाच- "ब्राह्मणेन राज्ञा दत्तः प्रतिग्रहो नो ग्राह्यो नो च गृहे प्रवेष्टव्य इति शास्त्रवचनान्मया तथा कृतमिति"।

अतिमलिनीभूतेन मुखेन रविदत्तः प्रोवाच-"धिक्तामपरिवर्तनीयां बलवतीं दुर्नियतिम् ! या विदुषोऽपि बुद्धिं विपर्यासयति । सत्यमेतत्-

विधात्रा रचिता या सा ललाटेऽक्षरमालिका ।
न तां मार्जयितुं शक्ताः स्वबुद्ध्याऽप्यतिपण्डिताः इति ॥

राज्ञा प्रदत्तानि वस्तून्येवमनादृत्य, मार्गे प्रक्षिप्य को नाम शक्नुयात् राज्ञः प्रियो भवितुम् ? तथा चोक्तम् -

प्रभुप्रसादजं वित्तं सुप्राप्तं यो निवेदयेत् ।
वस्त्रादि च दधात्यङ्गे स भवेद्राजवल्लभ इति ॥

सुशीला- "धर्मप्रवचनं शुश्रूषू राजा तमामन्त्रयदेवं प्रचार आ-ग्राममाग्रामान्तरमवोभूयत । तेन सांप्रतं ममाऽस्य गृहस्य प्रतिष्ठा एवं वरीवृध्यमानाऽस्ति, अहमनीशांऽस्मि तद्वर्णनाय अस्य ग्रामस्य प्रमुखा नार्यः प्रायः सर्वा एवाऽगता अत्रानेकाभिर्वचोभङ्गीभिर्मामनुलोमयितुम् । तासु काचन वस्त्रादिकं दत्तवती, काचिदावश्यकभावेऽर्थसाहाय्यस्याऽश्वासनम् दत्तवती । काचन गृहं संमार्जितवती, काचिच्च गोधूमादिकं पिष्टवती गृहकर्म साहाय्य प्रदर्शनाय । ग्रामे सर्वा अनुकूलाः, सर्वा आत्मीया जाताः सन्तीदानीम् राजप्रासादव्य-पदेशेन ।"

रविदत्तः-विश्वस्तानामेव राजसेवकानां राजद्वारे प्रवेशो भवति । तेन राजाहूतं त्वद्भर्तारं भ्रमेण राजसेवकं प्राप्नुवद्राजप्रसादं च मन्यमाना सेवक मनोवृत्तयः साधारणा ग्रामजना भविष्याशया तं मानयितुम् पूजयितुं च प्रवृत्ता भवेयुः । लोके तु राजसेवकानामेवं संमानो भवत्येव । उक्तं च -

अकुलीनोऽपि मूर्खोऽपि भूपालं योऽत्र सेवते ।
अपि संमानहीनोऽपि स सर्वत्र प्रपूज्यते ॥

सुशीला-"राज्ञा श्रद्धया तथाऽऽहूतः स, तस्मिन् स्वर्णावसरे यदि स्वयमपि राज्ञो मनोवृत्तानुसारीभूय कार्याण्याचरिष्यत्, तर्हि तत्कालमेवाऽस्माकं भाग्यसूर्य उदितोऽभविष्यत् । अहमज्ञाऽप्येतावज्जानामि । जानत्यपि तथा विदुषेऽहं किं ददानि कर्तव्योपदेशम् ? वरं पितृस्थानीयो भवानेव सम्यगुपदिशतु तम् ! "गृहस्थितिरेवं शोच्याऽस्ति । धनागममार्गोऽयमस्तीति"।

रविदत्तः- "मयोपदेष्टव्योऽनभिज्ञोऽस्ति त्वद्भर्ता धनागममार्गस्य ? किमेतदविदितमस्ति तस्य ?-

धवलान्यातपत्राणि वाजिनश्च मनोरमाः ।
सदा मत्ताश्च मातङ्गाः प्रसन्ने सति भूपतौ इति ? ॥

किञ्च- कोऽर्थ उपदेशेनैवमव्यावहारिकं चरितं प्रदर्शितवतस्तस्य ? । प्रथमवारमेव यस्मिन् रूपे तं राजा पर्यचिनोत्, इतस्तदन्यथयितुं न शक्यते । यः शुभोऽवसरः समागत आसीत्, स गतः । न स पुनः प्रत्येति । तथा चोक्तम्

कालो हि सकृदभ्येति पुरूषं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तेन कालकर्माऽचिकीर्षतेति ॥

विना धनम्, कथमेते बालका भ्रियन्ते, पोष्यन्ते, वर्ध्यन्ते, पाठ्यन्ते, सभ्यपङ्क्तौ निधीयन्ते च । तच्च धनमेवमनास चरितेन क्व लभ्येत ? सेवाधर्ममजानतो वाऽऽननुपालयतः क्व सुलभं भवत्यैश्वर्यम् ? उक्तमेवाऽस्ति नीतिशास्त्रे-

सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति नरास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् इति ॥

सुशीला-"भवज्जामाता राजनिकटं प्राप्त इति विमृश्याऽत्र समागतासु ग्रामीणनारीषु प्रायः सर्वा धनिकपत्न्य एवाऽऽसन् । तत्राऽहं चित्रीये- निर्धनास्तु श्वआशया समागताः,युक्तमेव तत् । परं धनिकाः किमर्थमायाताः ?

रविदत्तः- "एतत्कारणं यूयं न जानीथः । दीनापेक्षया धनिनो भीतान्तः करणा भवन्ति सदा । यतो धनसद्भावकारणादेव बहुसपत्ना भवन्ति धनिनः। तेनाऽत्मत्राणाय, स्वजनत्राणाय, वैरप्रतिशोधनाय च"कर्तव्यो महदाश्रयः" इति धृतसिद्धान्ताः सदा राज्याश्रयमपेक्षन्ते धनिनः । तथा चोक्तम्

सुहृदामुपकारकारणात् द्विषतामप्यपकार कारणात् ।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम् ? इति ॥

सुशीला-"पितः ! एतदेवाऽस्ति विवरणम् । इतः केन प्रकारेण जीवितव्यं भवेदस्माकम् ?"

रविदत्तः-"पुत्रि ! ब्राह्मणत्वाभिमानेन राजदत्तं लत्तया प्रहरतामाजीवनं नाऽस्त्यन्या वृत्तिर्जीवनाय भिक्षामन्तरेण । उक्तेमवाऽस्ति

ये जात्यादिमहोत्साहान्नरेन्द्रान्नोपयान्ति च ।
तेषामामरणं भिक्षा प्रायश्चित्तं विनिर्मितम् इति". ॥

अनुभूतानि दुःखदिनानि स्मृत्वाऽश्रूणि प्रोञ्छन्ती सुशीलाऽवोचत - "यद्येतत् साकल्येनाऽवगच्छेत्, तर्ह्यत्र प्राङ्गणे नो कश्चिदपि पदं निधास्यते । तस्य कारावाससमये एकं वर्षं यावत् को ग्रामजनोऽत्र प्राङ्गणे पदं न्यधत्त ? तथा रुजा मरणासन्ने कमले (बालके पुत्रे) यदि मे मातृगृहं नाऽभविष्यत्, तदा स नैवाऽजीविष्यत् । अन्नाभावादेव वयमपि सर्वेऽमरिष्याम । तद्दिनादेवाऽहं स्वमेतं ग्रामसमाजं परिचितवती । महासंकटे पतितं दर्शंदर्शमपि नैव कश्चित् सहायको भवति धनहीनस्य ।

रविदत्तः-"सत्यमेतत्, धनहीनानां नाऽस्त्येव कश्चिदात्मीयो नाम ! समाजविद्भिरुक्तमेवाऽस्ति -

इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां सर्वदा दुर्जनायते इति" ॥

सुशीला-"दीनतैव जीवनस्य पूर्णा दुरवस्थेति सांप्रतमहमजानाम्, या शोषयति शरीरम्, अवनमयति स्वाभिमानम्, निर्मूलयत्युत्साहम्, कुण्ठयति मनीषाम् ।"

रविदत्तः-"भद्रे ! दैन्यम् केवलम् जीवनस्य दुरवस्थामात्रम् । अपि तु मरणमेवेति विद्वत्प्रकाण्डानां मतम् । तद्यथा-

यत्र नैवाऽद्य न प्रातर्भोजनस्याऽस्ति संभवः ।
दारिद्र्यमिति यत्प्रोक्तम् पर्यायमरणं हि तत् इति" ॥

सुशीला-"ईदृशीम् शोच्यां स्वगृहस्थितिं याथार्थ्येन प्रदर्शयितुं को भवति भवतस्तथोपयुक्तो जनः ऋते स्वस्य परममित्रात् ? इति साग्रहमेव श्रीकृष्णं द्रष्टुं प्रेषितवत्यस्मि । न जाने परिणतिः का भवेत् ?"

रविदत्तः-"मन्ये तव गृहस्थितिर्नैवाऽविदिता भवेत्तस्य कृष्णस्याऽपि । तत् संपर्के जाते, मर्मविज्ञभावेन यदि स स्वयमेव स्वसुहृदर्थे किञ्चिद् विधित्सेत्तर्ह्येवैषा समस्या समाधास्यते । अन्यथाऽहं यावज्जामातुः प्रकृतिं प्रवृत्तिं च वेद्मि- तस्य मुखतो गृहदैन्यप्रकाशनमपि न भवति, कृष्णहस्ततः समस्यासमाधानमपि न भवति ।

सुशीला-"तर्हि ततोऽप्याशा न कर्तव्या ?"

रविदत्तः- "भद्रे ! प्रबुध्यस्व । अत्राऽस्ति महदेव संकटम् । यतो व्यवहारे धनस्यैवाऽस्त्यावश्यकता । परम् आदर्शस्य धनस्य च सामानाधिकरण्यं नैव संभवति । तयोर्मार्गौ पृथक्पृथगेव स्तः । धनायैष निर्देशः पालयितव्य एव-

"अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वार्थमभ्युद्धरेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ! इति" ॥

तथाऽऽदर्शाय चैष निर्देशः पालयितव्य एव-

"क्लेशतोऽपि परार्थाय धार्यं जीवनमात्मनः ।
परार्थताऽमृतं लोकेऽमरभावाय तां श्रयेत् इति" ॥

अनारतं निष्कामभावेन, अनासक्तभावेन च निर्मितम्, रूप्यकाणां कोटीभिरपि दुष्प्रापं राज्यचर्चितम् स्वं व्यक्तित्वमस्मज्जामाता द्वित्राणां युष्माकं क्षुद्रोदरपूरणार्थे कथं जहातु ? तत्स्वजनश्च चक्षुषोः पुर यद् एतादृशं गृहदौर्गत्यं वर्तते, तत्समाधानाय तं कथं न जागरयेत्, न प्रेरयेत्, न व्यथयेत् ? कीदृशं संकटमापतितम् । तत्स्वजनदृष्टौ गृहव्यवस्थानिरपेक्षः स दोषार्हो जातः । तद्दृष्टौ तदादर्शनिरपेक्षः स्वजनो दोषार्हो जातः । वस्तुतो द्वौ एव पक्षौ सदोषौ,

निर्दोषौ च समावेव स्तः । एकः पक्षोऽस्ति दिवान्धो व्यवहारपक्षस्य उष्णं प्रकाशं न पश्यति, अन्यः पक्षोऽस्ति रात्र्यन्ध आदर्शपक्षस्य शीतलं प्रकाशं नैव पश्यति । किं वदानि !"

सुशीला-"तेनैव कारणेन नाऽहमपि शक्नोमि, नैव कामये च तं 'साग्रेडं गृहस्थित्यर्थे व्यथयितुं विचालयितुं च । किञ्च- कदाचित्तु भवज्जामातुः सिद्धान्तं श्रुत्वाऽन्तरन्तरेव विहसाम्यहम्-"किं ब्राह्मणेन राज्ञा दत्तमपि नो ग्रहीतव्यम् ? गृहीते स प्रायश्चित्तीभवतीत्येतदपि लिखितं भवति धर्मशास्त्रे ?"

रविदत्तः- तदप्यस्ति-

"न राज्ञः प्रतिगृह्णीयात् लुब्धस्योच्छास्त्रवर्तिनः" इत्येकत्राऽस्ति । अन्यत्राऽप्यस्ति दृढमनुशासनम् महावराहमहापुराणादौ-

"ये तु भुञ्जन्ति राजान्नं लोभेन च भयेन च ।
आपद्गता हि भुञ्जन्ति राजान्नं हि वसुन्धरे ॥
दशवर्षसहस्राणि पच्यन्ते नरके सदेति" ।

सुशीला-"अहो ! तर्हि ब्राह्मणेतरेणैव प्रतिग्राहयं राजप्रदत्तम् ?"

रविदत्तः-

धर्मशास्त्राणां तानि कठोराण्यनुशासनानि व्यक्तिविशेषाणां कृते उपयुज्यन्ते, न साधारणानां नाम्नैव, जात्यैव ब्राह्मणभूतानां कृते । अन्यथा तथाऽनुशासनपालनेन सर्वसाधारणो लोकव्यवहारः कथं चलति ? कमलंकरोति, कं चाऽर्हति तथाऽसाधारणं कठोरमनुशासनम् ऋतेऽस्मज्जामातृसहशानां लोकोत्तरं व्यक्तित्वम् ?"।

ततः "कमलंकरोति" इति पदद्वयं श्रुत्वा सकौतुकः सोत्कण्ठश्च बालकः कमलो रविदत्तं प्रावोचत्- "कः किं करोति माम् ? " मातामह ! किमुक्तं भवता सांप्रतम् ? "कमलंकरोतीति"?

रविदत्तो विहसन्, दौहित्रं तं स्निग्धेन करेणाऽमृशन् प्रत्युवाच- "समयस्त्वाम् अध्यापयति, बहुश्रुतं करोति, बहुप्रशंसितं करोति इत्युक्तवानहम् !"

कमलः-"कथं बहुप्रशंसितो भवामि मातामह !"

रविदत्तः -"मातापित्रोः सेवया, देवतानां पूजया, राजभक्त्या, राष्ट्रसेवया त्वंबहुजनप्रशंसितो भविष्यसि !"

सुशीला सभ्रुकुटीभङ्गं कमलं वीक्ष्य प्रोवाच- "एष दुष्टः किं कुर्यात् सेवाम् मातापित्रोः ? उपदिष्टं न शृणोति । प्रत्युत विपरीतं विपरीत-मेवाऽचरति । भगिनीं ताडयति । तद्धस्तात् खाद्यमाच्छिद्य, तां रोदयित्वा खादति !"

कमलः-"किं मां सा चौरङ्कारम् आक्रोशति, ष्ठीवति च ?"

रविदत्तः-वत्स कमल ! अतः परम् तथा न कर्तव्यम् । स्नेह्या स्वभगिनी त्वया । अतः परम् यतरः परं ताडयति, ततरस्मै नागरङ्गफलं न दास्यते ।"

बालिका- "मातामह ! अहं तु नैव जातुचन तं ताडितवती । सांप्रतमन्यदीयनागरङ्गफलं मह्यं देहि" ।

तच्छ्रुत्वा विहसन्ती सुशीला प्रोचे- "औदरिकाणां भक्ष्येष्वेव दृष्टिः ! श्वो दास्यामि नागरङ्गफलम्, साम्प्रतं समौनमास्स्व" ।



प्राक्कतिपयवर्षेभ्यः, अत्र धरातले नैव क्वचिदपि द्वारकानाम्नो नगर्या अस्तित्वमासीत् । विश्वविश्रुतवीर्येण, महाप्रतापशालिना कृष्णेन सपत्नाक्रमणतः स्वान् यदुवंशिनो बन्धून् संरक्षितुं दुर्गरूपे निर्मिताऽऽसीदियं नगरी । अत्र परितो महामहत्यः शतघ्न्यः, महाशक्तिशालीनि विस्फोटास्त्राणि, शस्त्रास्त्रपूर्णाः सवरूथा रथाश्च सदा सज्जीकृत्य स्थापिता भवन्ति स्म । युद्धकुशलानां शस्त्रास्त्रसुसज्जितानां वीराणां सैनिकानां, रक्षिणाम्, चतुराणाम् चाराणां बंभ्रमणैः सशङ्कितैर्निरीक्षणैः प्रतिरक्षणैश्च सेयं नगरी शत्रूणां कृते दुर्गमा, दुष्प्रधर्षा, भयावहा, रहस्यमयी चाऽसीत् । यत्र मारुतोऽपि द्रढीयसस्तत्रत्यप्रशासनस्य निरीक्षणेभ्य आत्मानं गोपायितुं न क्षमते, तत्र को नाम सपत्नजनः सहसा प्रवेष्टुमुत्सहेत, योऽपृष्ठतश्चक्षुर्जीविताकाङ्क्षी चाऽस्ति । दुर्गायितां तां नगरीं प्रविश्य स एव जनस्ततः सकुशलं निवर्तितुं शक्नोति, यो भगवतः कृष्णस्य भक्तोऽस्ति, अथवा तं प्रपन्नोऽस्ति । सपत्नैर्मनसाऽपि दुष्प्रधर्षायास्तस्या नगर्या याऽस्ति बहुमुखी विशेषता, सा नैव तिरोहिताऽऽसीत् सर्वेषां तद्युगीनानां पर्यवेक्षकाणाम् ।

सा द्वारकानगरी परितो महद्भिः स्वर्णप्राकारैः परिवेष्टिताऽऽसीत् । यत्र प्रस्तरचिता विशालाः स्वच्छा महान्तो राजमार्गाः, शाखामार्गाः, पद्धतयश्च पथिकानां महासौविध्यं प्रददति स्म । स्वर्णच्छदिभिः, मणिखचितैर्मनोज्ञैरन्तर्द्वारैः, माणिक्यखचितैरारोहणैः, चित्रविचित्रपताकैरट्टैश्च शोभितानि पङ्क्तिबद्धानि महार्हाणि सुन्दरसुन्दराणि हर्म्याणि, फलपुष्पभारनतशाखैः सुरभिगन्धिभिरविरलं गुणवर्णनपरैरिव पक्षिमधुरकुञ्जनैश्च विशेषिताभिः सदा हरिताभिर्विभिन्न प्रकाराभिर्वृक्षवल्लीभिर्मनोहराणि उपवनानि च तां नगरीममरपुर्या सह प्रतिस्पर्धयन्ति स्म । किञ्च-लोकपालसमर्पितैः पर्वतभीमकायैर्दिग्गजैः, श्यामकर्णलक्षणलक्षितैर्घोटकैर्विद्युत्प्रकाशवत्त्वरितगतिभिर्दीप्तिमद्भिः स्यन्दनादिभिश्च व्याप्ता, समुद्रतटवर्तिनी अष्टचत्वारिंशत्क्रोशव्यासवती समुद्रमारुतसंसेविता सा द्वारकानगरी साक्षाद्विश्वकर्मणा स्वविज्ञान-शिल्पकौशलसर्वस्वप्रदर्शनायैव विनिर्मितेव सौन्दर्यस्याऽद्भुतां विलक्षणां मूर्तामुदाहृतिमिवाऽत्मानं प्रदर्शयन्ती जगत्प्रख्याताऽऽसीत् ।

मध्येद्वारकानगरि राज्ञ उग्रसेनस्य, वसुदेवस्य, बलभद्रस्य, भगवतः कृष्णस्य च पृथक्पृथक्प्राकारपरिवेष्टिता गगनचुम्बिनो विशालाः प्रासादा आसन् । कृष्णस्य प्रासादे तु नव एव निधयः कुबेरस्य, सर्वा ऋद्धिसिद्धिविभूतयो

लोकपालानाम् संहत्य कृताश्रयास्तस्य (कृष्णस्य) सर्वेशित्वं व्याचक्षते स्म । देवराजः पाकशासनो निजां सुधर्मासभाम्, पारिजातवृक्षं चोपहृत्य भगवन्तं कृष्णं सभाजयामास । सुधर्मासभाया वैशिष्ट्यमेतदासीत्, तस्यांप्रविष्टं जनम् क्षुत्तृषादयो मर्त्यधर्मा नैव बाधन्ते स्म ।

कृष्णप्रासादस्य पूर्वतो विवृतद्वारो यः प्राकारोऽस्ति, तदभ्यन्तर एका नाऽतिविशाला मनोज्ञा शाद्वला भूमिरासीत् । तस्याः पश्चिमतः प्रासादमूलद्वारमासीत्, यत्र शस्त्रास्त्रसज्जाः प्रतिरक्षिणो द्वारपालाः सजागरास्तिष्ठन्ति स्म । (तस्याः) उत्तरतो घनच्छाय एको महान् कदम्बवृक्षश्चाऽसीत् ।

श्रीदामाऽपि द्वारकां प्राप । ततस्तस्या नगर्या अनुपमं रामणीयकं दर्शं दर्शं कृष्णस्य प्रासादं प्रच्छम् प्रच्छम्, नागरिकैस्तर्जनीसंज्ञया निर्दिष्टमार्गः स कृष्णप्रासादाभ्यन्तरवर्तिनीं तामेव शाद्वलां भूमिं प्राप । प्राप्य च तत्र प्रथमं स विस्फार्य नेत्रे सर्वतो द्रष्टुमुपाक्रमत । पश्चात् क्षणं मूलद्वारमभि एकदृष्ट्या विलोक्य ततस्तस्योत्तरतो वर्तमानस्य महतो निविडच्छायस्य तस्य कदम्बवृक्षस्य तले गत्वा श्रान्तो घर्मार्तश्च स स्वं प्रसेवमुपधाय विशश्राम । ततः प्रासादस्य मूलद्वारं प्रति दृष्टिं ददानः स व्यचिन्तयच्च- "कियत्त्वरितम् त्वरितम् कियन्तः सादिनः, कियन्तो रथिनः, कियन्तो गजारोहिणस्तत्र यातायातं कुर्वन्तः सन्ति । संभवेत्- ते ते भूपतयः सामन्ता मन्त्रिणः सचिवा वा भवेयुः । ते आयान्ति, गच्छन्ति, आयान्ति गच्छन्ति । एवं क्रमो नैरन्तर्येण चलन् दरीदृश्यते । अवश्यमेते कृष्णदर्शनाय समायाताः, दर्शनोत्तरं अह्नाय निवृत्ताश्च भवेयुः । तादृशैः सुसज्जितवेषैः सभूषणैः संपन्नैश्च प्राप्तप्रवेशानुज्ञम् तद् द्वारम् अस्मादृशानां हीनवेषाणां दुष्प्रवेशमपि भवितुं शक्नोति । कामं भामन्तः प्रविविक्षन्तमपरिचिन्वन्तस्ते ते द्वारपाला निषेधन्तु, परम्, मन्ये- गुरुकुलवाससमये नखमांसवन्मिलितम् स्वमित्रं द्रोणं राजा द्रुपद इव मम कृष्णस्तु मामेवं हीनवेषमपि नैवाऽवमंस्यते । तथाऽपि घटीद्वयं यावदस्यैव वृक्षस्य च्छायातल एवमेव विश्रम्य ततो दत्तदृष्टिः पर्यवेक्षे ।

एवं विमृशत्येव तस्मिन् द्वौ रक्षिणौ तमुपगम्य पप्रच्छतुः-"को भवान् ? किमर्थमत्रैवं शेते ? किमस्वस्थोऽस्ति भवान् ?" ।

श्रीदामा सगाम्भीर्यं प्रत्युवाच-"आम्, आत्मनोऽस्वस्थत्वकारणादेव भवचिकित्सकं वैद्यं गवेषयन् अत्र प्राप्तोऽस्मि" ।

एतदाकर्णनोत्तरमेवैनं नवमुदन्तं कृष्णाय निवेदयितुम् त्वरितमेव तौ ततः प्रतस्थाते । ततः किञ्चित्क्षणानन्तरमेव पुनस्तौ निवृत्य श्रीदामानं प्रोचतुः-"भो ! ब्राह्मण ! प्रभोराज्ञाऽस्ति-"अश्वशालायाः पृष्ठतो

वर्तमानेऽतिथिगृहे भवताऽऽस्वास्थ्यलाभम् स्थातव्यम् । वैद्यद्वाराऽऽवश्यक उपचारो भविता । सर्वा भोजनादिव्यवस्थाऽपि तत्रैव कारयिष्यते । अन्यद्वस्त्रादिकमपि किञ्चिदावश्यकमस्ति चेत्तदपि भवान् प्राप्स्यते । तदुत्तिष्ठतु भवान् । वयं तत्र प्रापयामः । सम्यग् भिषज्यामः । उपयुक्तोपचारैः सेवया चोल्लाघयामो भवन्तम्"।

तदाकर्ण्य विहसन् श्रीदामा प्रोवाच-"भो ! त्यजत तं मंमोपचारकार्यक्रमम् । स्वं प्रियं सखायं दिदृक्षुरिहाऽगतोऽस्मि । प्रथमं तमेव दिदृक्षे"।

रक्षिणौ-"कोऽस्ति भवतोऽत्र प्रिय सखा ? यं भवान् दिदृक्षते ?

श्रीदामा- "वासुदेवः कृष्ण एव मम प्रियः सखा । तमहं दिदृक्षे" ।

रक्षिणौ- "पुनः कथयतु भवान्-कः प्रियः सखा ?"

श्रीदामा-"वासुदेवः कृष्ण एव मम प्रियः सखा ।"

रक्षिणौ -"किं नाम भवतः ? कुत आगतो भवान् ?"

श्रीदामा-"श्रीदामनामाऽहं करुषदेशादागतोऽस्मि"

तदाकर्ण्य किञ्चित् परतो गत्वा तौ रक्षिणौ मिथः कर्णे संलपितुमारब्धवन्तौ ।

तयोरेकः प्रोवाच- "हुं न नाम विक्षिप्तचित्त एषः ? एतादृशो हीनवेषो ग्रामीणोऽसभ्यो जनो भगवन्तं कृष्णं मम प्रियः सखा' इति वदति । कि सम्भाव्यते एतत् ? ईदृशम् विवरणं कथं नेतव्यम् ? प्रभोः सविधे

अन्यः प्रोवाच -"अहमपि चित्रीये कथयेतत् संभाव्येतेति । परमेष विक्षिप्त चित्त एव भवेदित्यपि कथयितुं न शक्यते । यत् असङ्गतं असंबद्धं च नैस किञ्चित् ब्रवीति । "

प्रथमः "तर्हि किं करवाव ? प्रभवे निवेदयाव ?"

द्वितीयः– "कथं न निवेदयाव ?"

एवं संमन्त्र्य तौ शीघ्रातिशीघ्रमेव कृष्णमुपगम्य तत् न्यवेदयताम् - "भगवन् । कदम्बवृक्षतले शयानः अस्वस्थ स ब्राह्मणो ब्रूते- "करुषदेशादागतः श्रीदामनामाऽहं स्वं प्रियं सखायं कृष्णं दिदृक्षे इति" ।

तच्छ्रवणोत्तरमेव भगवान् . कृष्ण आसनादुदतिष्ठत् सोत्कण्ठं तावपृच्छच्च "कि मय प्रियः सखा श्रीदामा मां द्रष्टुमागतः ? आगच्छन्नेव पथि सोऽस्वस्थश्च सञ्जातः ? यूयं तूर्णमेव रोगिवाहिकां खट्विकामादायाऽगच्छतेति सेवकान् आदिशत अहं तमानेतुं स्वयमेव गच्छामि ।"

तौ प्रहरिणावेवमादिश्य कृष्णो राज्ञीं रुक्मिणीम् आहूय प्रोवाच - "भद्रे । श्रुतं त्वया ? मां द्रष्टुं मम प्रियः सखा श्रीदामा समागतः । आगच्छन्

एव मार्गेऽस्वस्थश्च जातः साम्प्रतं बहिर्द्वारम् शयानोऽस्ति । गच्छाव, तमानयाव" ।

साक्षाद्भगवतः कृष्णस्य तादृशीमपूर्वां तत्परतां प्रेक्ष्य सर्वे सविस्मयाः समुत्सुकाश्च तमन्वयुः । कृष्णश्च प्रसादस्याऽन्तःपुरम् पञ्चषास्ताः कक्ष्याः। प्राङ्गणम्, मूलद्वारम् च क्रमशोऽतिक्रम्य श्रीदामानम् उपागमत् । तस्याऽलङ्घनीयादेशतः सेवकाश्च रोगिवाहिकां खट्विकां वोढ्वा तत्र प्राप्ताः । ततः श्रीदामनि चिरमित्रं कृष्णं समागतं वीक्ष्योत्थानाय चेष्टमाने भगवान् कृष्णः सेवकान् आदिदेश–"तूर्णं खट्विकायामेतं निधत्त" इति । "मा मा" वदत्येव श्रीदामनि वलीयांसः सेवकाः भगवत आदेशपालनाय तद्वचनमनाकर्ण्यैव बलात्तमुत्तोल्य रोगिवाहिकायाम् खट्विकायाम् स्थापयामासुः

रोगिवाहिकायाम् खट्विकायाम् वहनसौकर्याय अग्रतो द्वौ, पृष्ठतो द्वौ इति संहत्य चत्वारो दण्डाः योजिता भवन्ति । तेष्वग्रभागस्य दक्षिणं दण्डं स्वयं कृष्णः तदादेशात् वामं दण्डं राज्ञी रुक्मिणी, पश्चाद्भागस्य दक्षिणं दण्डमेकः सेवको वामं दण्डं चाऽन्य एवं चत्वारो मिलित्वा, खट्विकायां श्रीदामानं वोढ्वाऽन्तःपुरं निन्युः । "स्वयं भगवता कृष्णेन, राज्ञ्या रुक्मिण्या च खट्विकायां निधाय स्कन्धाभ्यां वोढव्यो धन्यातिधन्यः कोऽसौ महाभाग" इति तथाद्भुतस्याऽपूर्वस्य कौतुकस्य दर्शकाः सर्वेऽचित्रीयन्त । विस्मयावहः स उदन्तः स्वल्पेनैव समयेन सर्वत्र पप्रथे । श्रोतारश्च विस्मयेन चित्रलिखिता इव स्तब्धा अभूवन् । भगवान् कृष्णस्तमन्तः पुरे प्रापय्य पर्यङ्के स्वापयितुं प्रायतत । परं श्रीदामाऽसुप्त्वैव समुपविष्टः । तथापि कृष्णः तच्चरणौ बलादाकृष्य समवाहयत् राज्ञीं रुक्मिणी च तमुपवीजयितुं समादिशत् । एवं स्थितौ भगवान् कृष्णः स्वं प्रियं सखायं श्रीदामानम् अपृच्छत्- कोऽस्ति रोगः ? केनाऽस्वस्थो भवान् ? इति"

श्रीदामा विहस्य प्रत्युवाच- "अस्योत्तरम् पश्चाद् दास्यामि । प्रथमं तु ममैषोऽनुरोधः संमन्तव्यः । यदहमत्राऽगतः सख्यभावेन, स्नेहप्रेरणया न तु पूज्यभावेन संमानाकाङ्क्षया । आवयोर्गुरुकुलसम्बन्धो यदि विस्मर्येत, तर्हि नैवं मादृशो हीनान्नवेषो जनोऽर्हति सर्वैश्वर्यसंपन्नेऽस्मिन्, प्रासादे प्रवेशाय । अहं तु केवलं तेनैव सख्यसंबन्धेन् स्मारितो भूत्वा, प्रेरितो भूत्वाऽत्राऽगतः । तद्गुरुकुले सतोर्येन त्वंकारप्रयोगेणाऽवयोर्मिथः संलापो भवति स्म, अत्राऽतः परमपि तेनैवाऽवयोः संलापोऽस्तु, न भवच्छब्द प्रयोगेण । त्वंकार एव प्रियो मम ।"

कृष्णोऽपि विहस्य तं प्रोवाच-"स्मृतं स्मृतं मया । त्वंकार एव प्रियो ममाऽपि ।"

श्रीदामा पुनर्विहस्य प्रोवाच-"तर्हि तदस्तु। अन्यत् उपन्यस्यामि- यत्त्वम् पृष्टवान् मां 'को रोगाऽस्ति'। अत्रैष भ्रमो जातो यत्- तव रक्षिणौ मामतिदुर्बलमतिकृशम् घर्मेण क्लान्तम् मार्गेण च श्रान्तम् वीक्ष्य अपृच्छताम्- 'किमस्वस्थोऽस्ति भवान् ?' इति। अहं च तदाकर्ण्य नर्मभङ्गयाऽविहस्यैव तौ प्रत्यवोचम्- "अस्वस्थभावादेव भवचिकित्सकं वैद्यं गवेषयन् अत्राऽगतोऽस्मीति"। ततोऽसावधानौ तौ वाक्यगतमेकम् 'अस्वस्थ' पदमेव हृदि निधाय, मम पूर्णवाक्यस्य तात्पर्यमबुद्ध्वैव ससम्भ्रमम् त्वामुपगम्य प्रत्यवेदयताम्- "अस्वस्थोऽस्ति" इति। तयोस्तत् विवरणम् त्वामपि भ्रमेऽपातयत्। ततोऽपि तयैव भ्रान्तधारणया "मा मा" वदत्येव मयि तवाऽलङ्घनीयोपदेशतः खट्विकायां त्वत्सेवकाः मां न्यदधुः। यूयं च सर्वे मिलित्वा वोढ्वा च मामत्राऽनीतवन्तः। एतद्धि यथार्थम् विवरणम्।"

एतदाकर्ण्य सर्वेऽहसन्। कृष्णोऽपि विहसन् प्रोवाच तम् - "आम्, बालिशौ तौ अध्यात्मप्रसङ्गोचितया भङ्गया प्रयुक्तानां शब्दानां तत्त्वार्थम् कथं नाम जानीयाताम् ? आस्तां तत्। सर्वप्रथमं तु कथय सखे। मार्गेण श्रान्तोऽसि, बुभुक्षितोऽसि। किमुपकल्पयानि ते साम्प्रतम् लघुभोजनाय ? फलानि किं वा मिष्टान्नानि ? पेयम् दधि, तक्रम्, शर्करोदकं वा ? उत कूर्चिकाम्, रसालाम् वा ?"

श्रीदामा-"नो, नो, नो। न किमप्यावश्यकमिदानीम्"।

कृष्णः-"नो, नैवम् भवति। किञ्चित्तु ग्रहणीयमेव, भोज्यमेव" इत्युक्त्वा कृष्णः परिचारिकाम् मालतीमाहूयोदितवान्- "तक्रम्, फलानि चाऽनय आवयोर्द्वयोरर्थे"।

परिचारिका प्रोचे-"प्रभो! राज्ञ्या रुक्मिण्या आदेशतो वयमानयन्त्य एवाऽस्म।"

तस्यामेवं वदन्त्यामेव फलानि, मिष्टान्नानि, दधितक्रादिकं च चतसृभिः परिचारिकाभिर्वाहयित्वा राज्ञी रुक्मिणी कृष्णमुपगम्य पृष्टवती-"किमर्थम् मालतीं भवानाहूतवानिति"।

कृष्णः फलादीनि तर्जन्या दर्शयन् प्रत्युवाच-"एतदर्थ एव, आनयेति वक्तुम्"।

रुक्मिणी सस्मितम् निवेदितवती-"एतत्तु गृहिणी कर्तव्यान्तर्गतम्, ममैव कर्तव्यमासीत्। अहमासम् कुर्वत्येव। किमेतन्मालती नाऽवोचत् ?"

कृष्णः प्रत्यूचे-"राज्ञ्या आदेशतो वय मानयन्त्य एवाऽस्मेति साऽकथयत्"। समीचीनं जातम्"

ततः कृष्णः श्रीदामानं प्रावोचत् सस्मितम्- "खादाव, एकैकां स्थालीम् आदाय । अहं तु प्रथमम् ...."

इत्यर्धमुक्तवत्येव तस्मिन् प्रमुखस्तदङ्गरक्षकस्तमभ्युपेत्य सजयकारम् प्राणमत् । ततः कृष्णः स्ववचनक्रमं विच्छेद्य तमपृच्छत्- "कोऽस्ति विशेषः ? इति ।"

स प्रत्यवोचत्-"सचिवो निवेदयति-पूर्वनिर्धारित कार्यक्रमानुसारम् श्वः कुरून् प्रति प्रस्था...."

तं मध्य एवाऽवरुध्यः कृष्णः प्रोचे- "मातङ्ग ! शृणु, सचिवं तथाऽन्यांश्च श्रावय, आगमिष्यतश्च जनान् सूचय- अत्र नूतनोऽस्ति प्रसङ्गः । तदेतत्सर्वैर्द्रष्टव्यम्, सर्वैर्वेत्तव्यम्- मम बहिश्चरः प्राण इव, परमम् मित्रम् श्रीदामा समागतः । बहुभिर्वर्षैरद्य पुनर्मिलितावावाम् । तेन यावत्समयपर्यन्तं मम मित्रं श्रीदामाऽत्र वसेत् , तावत्पर्यन्तम् अहमस्य स्नेहेन नियन्त्रितोऽस्मि । न कैश्चित्सङ्गंस्ये, न नवं किञ्चित्कार्यं प्रारप्स्ये, न वा क्वचित् प्रस्थास्ये । तदेतत् सर्वत्र प्रचारय । येनावयोर्विश्वस्तरहः संलापे मा भूदन्तरायः कश्चित् । प्रासादस्य सर्वोऽनुचरवर्गोऽस्यैव सेवायै नियोक्तव्योऽस्ति, एतादृशं व्यक्तित्वं बिभर्त्येषः । यूयं नैनं परिचिनुथः । चेत्किमपि आत्ययिकम् निवेदनीयं भवेत् तर्हि त्वमागच्छ तत्र भवन्तम् उद्धवं प्रेषय ।"

तदाकर्ण्य स प्रमुखोऽङ्गरक्षक आदेशपालनाय ततो निर्गतः । ततः कृष्णः पुनः प्रोवाच श्रीदामानम्-"अहम् कथयन्नासम्, मध्ये तदागमनेन व्यच्छिद्यत । अहं तु प्रथमम् तक्रमेव पिबामि । यतोऽद्य ग्रीष्मोऽस्ति ग्रीष्मातपः तप्त उष्ण एवं वातो वहति । एवं मार्गे निदाघतप्तस्य, श्रान्तस्य, क्लान्तस्य च तव कृतेऽपीदानीम् तक्रं रसाला च द्वे एव हितकरे भवतः । प्रथमं तक्रं पिब, तदनु रसालां लेढि । ततोऽन्यानि यथारुचि"।

एवं चिरेण सङ्गतौ, मिथो विस्रब्धं संलपन्तौ, स्वान् कार्यानुभवान् विवृण्वन्तौ, प्रसङ्गानुसारं मध्ये मध्ये हसन्तौ, लघु भोजनं कुर्वन्तौ, मिथ एकत्वेन स्वमपि पृथक्तया विस्मरन्तौ तौ आनन्दाब्धौ निममज्जतुः ।

कति पवित्रोऽस्ति सख्यस्नेहः । नैष कञ्चित् जातिविशेषं, वर्णविशेषम् स्थानविशेषं, स्थितिविशेषं वाऽपेक्षते । नैष लेशतोऽपि गर्वं, स्वार्थं, परभावं वा बिभर्ति । सत्यम् पवित्रहृदयाधिष्ठानः स्वयम्भूरेष स्नेहनामा सद्भावप्रकर्षः परात्मवत् परार्थे स्वार्पणयज्ञमनुशास्ति लोकान्, वशयत्याकर्षति च सम्बद्धान् ईशित्वेनेवाऽदृष्टेन ।

अन्येद्युरप्यातपस्तीक्ष्णस्तिग्मश्चैवाऽसीत् । महाराज्ञी रुक्मिणी श्रीदामानमुपवीजयन्त्यासीत्, अन्यैका परिचारिका च कृष्णम् । श्रीदाम्ना सस्नेहं मिथः संलपन्नेव कृष्णो विस्मृतं किमपि पुनः स्मृतवानिव संलापप्रसङ्गमेव विच्छेद्य ससम्भ्रमं श्रीदामानमपृच्छत्- "सखे ! नाऽनीतं त्वया किञ्चिन्मदर्थे उपायनम् स्वगृहतः ?"।

तदुक्तमाकर्ण्याऽपि श्रीदामा रुक्मिण्यग्रतः संकुच्य तत् पृथुकप्रसृतिद्वयम् न दर्शयितुं शशाक, न चाऽनीतमेव नास्तीति मृषा वक्तुमपि शशाक । तेनारक्त वदनः किञ्चिद्विवक्षुरिव, वक्तुमप्यशक्तः इव, सिस्मयिषुरिव स्मयितुमप्यशक्त इव च स क्षणं ददृशे । ततोऽन्तर्दृष्टिर्मर्मविच्च स कृष्ण एव विहसन् बलात् तत्प्रसेवमाच्छिद्य, तदन्तर्निहिताम् पोटलिकामुन्मोच्य तत एकमुष्टिमितं पृथुकमादाय "ईदृशं मम प्रियमुपायनमानीयाऽपि मह्यमददानः कीदृशस्त्वम् ? "इति नर्मवचोभङ्ग्या तं निर्भर्त्स्य तत् कवलितवान्, वर्णितवांश्च-"अहो कियत् स्वादिष्ठमिति !" ततः पुनरन्यमेकमुष्टिमितं पृथुकम् गृहीत्वा जिघत्सन्तं कृष्णं सहस्तग्राहमेव महाराज्ञी रुक्मिणी वारयामास-"पर्याप्त पर्याप्तम्" इति ।

ततोऽनर्हमेतन्मयाऽऽनीतमुपायनमेतावन्महार्हभूतिविभूतिशतसंपन्नस्य कृष्णस्य "इति मनसिकृत्य गृहीतसंकोचमरक्तमुखं श्रीदामानं निश्चिन्तयितुं मर्मज्ञा राज्ञी रुक्मिणी तं सस्मितं प्राह- "यद्यहं न न्यरोत्स्यम्, तर्हि तत्सर्वमेव पृथुकं भवतः सखा हासं हासं स्वादं स्वादमभोक्ष्यत् । कियद्वा रोचतेतमाम्, पृथुको मत्स्वामिने ? चित्रीयेऽहम् । नूनं गुरुकुलवाससमय एव ख्याताऽस्य पृथुकप्रियता । अन्यथा भवान् तदर्थे कथं पृथुकानानयेत् ? धन्यं भवताम् तत् सखिप्रेम । कियन्मनोवृत्तानुसारि, कियन्मनोवैज्ञानिकम्, कियन्मिथो मर्मज्ञं मिथो रुचिज्ञं च ।"

कृष्णः-"रुक्मिणि ! त्वं मह्यं सर्वं पृथुकं नो दत्तवती । तथात्वेपि अस्त्विदानीम् । परं मम परममित्रेणाऽनीतः सोऽन्यथा नो व्ययनीयः । सम्यक् न्यस्य क्वचित् । यदाऽहं याचिष्ये, तदा देयः । अस्य मूल्यं महत्त्वं यूयं न जानीथ । सर्वे लोकपालाः स्वाः स्वा अमूल्या विभूतीः तथा पृथिव्याः प्रायः सर्वे राजानः, लब्धख्यातयो भूमिपतयः, सामन्ताः, राजनीतिकसामाजिक व्यक्तित्वविशेषाश्च स्वस्वप्रियाणि राष्ट्रियाणि प्रान्तीयानि च वस्तूनि महार्हाणि प्रीणनाय मह्यमुपहृतवन्तः सन्ति । परं तेषां महतां बृहताम् अनर्घाणां च

रुचिराणामुपायनानामपेक्षया मद्भक्तेन श्रद्धयोपहृतं पत्रं पुष्पमपि मत्कृते बहु महत् बृहत् मूल्यवत्तमम् प्रीतिकरं च भवति। अनेनाऽनीतस्य पृथुकस्य मूल्यम् त्रैलोक्यराज्यादप्यधिकमहं मन्ये। त्वं समयेनैतज्ज्ञास्यसि।"

रुक्मिणी-"प्रभो! किञ्चित्त्वहमपि वेद्मि। परमहं तु किमर्थं न्यषेधम् तद् भक्षण..."

तथा निषेधकं स्वमभिप्रायमभिव्यक्तुकामां रुक्मिणीं मध्य एवाऽवरुध्य कृष्णः प्रोवाच- "आवामपि तवाऽभिप्रायं विद्वः। भवतु, एष सन्दर्भोऽत्रैवाऽस्तु। आवयोः संलापं मा विजहीदानीम्"।

रुक्मिणीमेवमपसार्य कृष्णः श्रीदामानमवोचत्-"श्रीदामन्! कियदकुतोभयम्, कियच्चानन्दमयमासीत्तदस्माकं छात्रजीवनम्? यत्र नाऽसीच्चिन्तनीयः समाधेयश्च प्रपञ्चः कश्चित् एकं ज्ञानार्जनमन्तरेण। तच्च ज्ञानार्जनम् कियन्मूल्यवदासीत्, तदा नो वयं तदनुमातुं मातुं वा शक्नुमः स्म। यत्तुभ्यं मह्यं चैतावत् कार्यसामर्थ्यं प्रादात्। स्मृतमात्रं तच्छात्रजीवनमधुनाऽपि मन आनन्दयति।

श्रीदामा-"कृष्ण! त्वं निद्रायामतीतस्य गुरुकुलवासस्य स्वप्नान् पश्यसि न वा? अहं तु समये समये पश्यन्नेवाऽस्मि। गार्हस्थ्यप्रवेशोत्तरम् पञ्चषान् वारान् तादृशान् स्वप्नान् अपश्यम्, यत्राऽहं गुरुकुले एव वसन् भवामि, अध्ययनान्ते त्वयाऽन्यैः सखिभिश्च जातु देवदैत्यक्रीडाम्, जातु गर्तादिलङ्घनक्रीडाम् जातु च निलयनक्रीडाम् कुर्वन् भवामि गुरुपत्न्या आज्ञया पूजार्थे पवित्रं जलमानयन्नेव भवामि, जातु पर्शुना इन्धनाय काष्ठं छिन्दन्, कर्तयन्, खण्डयन् एव भवामि, जातु च गाश्चारयन्नेवं भवामि। गुरुकुलस्य घटनासु स्मृतमात्रास्वप्येवमानन्दो भवति चेत्स्वप्ने तत्रैव निवासात्तु कियानानन्दो मयाऽन्वभूयतेति त्वमेवाकनुमातुं शक्नोषि"।

कृष्णः-विश्वकल्याणाय साधकानाम् भौतिक सुखनिरपेक्षत्वा-नासक्तत्वसंपादनाय शरीरं सना न स्थास्यति, आत्मा जात्वपि न मरिष्यते इति ज्ञानप्रदानपूर्वकम् साधनरूपे आत्मविकासमार्गे प्रवर्तयित्रीम्, वैयक्तिकस्य क्षुद्रसंकीर्णस्वार्थस्य सीमानमुल्लङ्घ्य राष्ट्रस्य समाजस्य विश्वस्य च हितायाऽत्मा समर्पणीय इति विश्वसाम्राज्यादपि महर्घाम् विश्वभावनाया मार्गे प्रापयित्रीम् चेतनां ददत् गुरुकुलं जाग्रत्स्मृतं स्यादथवा स्वप्ननिर्विष्टम्, स्मृतमात्रं मन आनन्दयत्येव। अथवा कति वा वर्णयानि? गुरुकुलस्याऽनन्ददायीन्यवदानानि संस्मृत्य संस्मृत्य। श्रीदामन्! त्वमेव वद- "एतं मायानिर्मितं दुःखबहुलं प्रपञ्चं विस्मृत्य विश्वकल्याणाय ऋषिमहर्षिभिराम्नातानां श्रुतिस्मृत्यादिशास्त्राणा-मध्ययने, चिन्तने, मनने च कियानानन्दो भवति? साक्षाद् भगवत्याः सरस्वत्या

आराधनमेव हि तदध्ययनं नाम । मातुः सरस्वत्याः सेवया, तत्प्रसादजेन च ज्ञानेन य आनन्दो भवति, सोऽन्यत्र लभ्येत ? गुरुकुले स्वाध्यायनिमग्नौ अन्तस्तमोनिराशादुद्द्योतितान्तः करणौ तौ द्वावपि गुरुशिष्यौ एवमवाङ्मनसगोचरं दिव्यमानन्दमनवरतमनुभवतः"।

किञ्च- गुरुकुले स आनन्दप्रकर्षो मरणोत्तरमपि नैव विस्मर्तुं शक्यते, योऽस्मत्पूज्यस्य गुरोर्गुरुपत्न्याश्च वात्सल्यमयेन स्निग्धेन व्यवहारेण प्रदत्त आसीत् । श्रीदामन् । पारेयमुनम् श्रीपुरग्रामस्य जीवनन्दाभिधेयम् अस्मत्सतीर्थ्यम् स्मरसि ? तस्मिन् मन्थरज्वरेण बलवद् बाधितेऽस्माकं पूज्यो गुरुर्गुरुपत्नी च कियददूयेताम् ? जीवानन्दस्य व्यथाचिन्तयैव कति सायं भोजनान्यपि सन्त्यक्तानि मात्रा गुरुपत्न्या । तस्मिन्नेव सन्दर्भे मात्रा गुरुपत्न्या सह अम्बिकाया मन्दिरे सपूजोपचारम् स्मरसि वयमपि गमिष्यामः, पश्चात् ज्ञास्यामश्च- "जीवानन्दो यद्युल्लाघो भवेत् , तर्ह्यागत्याऽहं त्वां षोडशोपचारैः पूजयिष्यामीति मात्रा गुरुपत्न्या भगवत्यम्बिका संप्रार्थिताऽसीदिति" । तावान् स्नेह आसीद्गुरुपत्न्या अस्मासु । तं तादृशं निष्कामं स्नेहमन्यत्र त्वं क्व लभेथाः ?"

पुनः साट्टहासं कृष्णः प्रोवाच- "एकस्य दिनस्य तां घटनां नैवाऽहं कदापि विस्मरामि । यां स्मृत्वाऽद्याकपि, एकाक्यपि मनसा हसन्नेव भवाम्यहम् । गुरोः प्रातः पूजासमय आसीत् । अहं त्वन्यस्मै कार्याय नियुक्तचर आसम् । पूज्यो गुरुः त्वां, सखायं जीवानन्दं चाऽग्रतः कृत्वाऽवदत्- "वत्सौ । अन्यासां गवाम् सर्वम् दुग्धं कटाहे पतितम्, प्रतापितं च । इतोऽवशिष्टा एकैव गौर्दोह्याऽस्ति । इतो मे पूजासमयः अतिवर्तमान एवाऽस्ति । पञ्चगव्य-पञ्चामृतनिर्माणार्थे दुग्धमत्यावश्यकम् जातम् । तत् युवयोः कतरोऽस्ति शीघ्रो दुग्ध्वा दुग्धमानेतुम् ?"

ततः पूज्यस्य गुरोर्वचनेन युवयोरहमहमिका सञ्जाता । जीवानन्दः प्रोवाच- "अहं शीघ्रोऽस्मि, दुग्ध्वाऽऽनयामि इति"। त्वं चाऽकथयः- "अहं शीघ्रोऽस्मि, दुग्ध्वाऽऽनयामीति" । ततो गुरुस्त्वाम् वृतवान्, आदिष्टवांश्च "तूर्णमेव, तूर्णमेव दुग्ध्वाऽऽनय, गच्छ । अहमत्रैव प्रतीक्षमाणो भविष्यामीति" ।

ततो जीवानन्दो मलिनमुखः सञ्जातः । गुरोर्विश्वासात् सगर्व उत्फुल्लवदनश्च सन् दोहपात्रमादाय त्वं गां दोग्धुं गतः । दोहनाय गोर्वत्समपि अमोचयः । तत्कालमेवैका गौः स्वतो बन्धनादुन्मुच्य, गृहारामे प्रविश्य, देवार्चनोपयोज्यानि सर्वाणि पुष्पाणि भक्षयित्वा, प्रमृद्य, प्रमथ्य च महतीं क्षतिं कर्तुं प्रारभत । सा दर्शनीया, उपेक्षणीया स्थितिर्नासीत् । तेन त्वं तस्या निवर्तनाय, बन्धनाय च ततोऽभियातवान् धेनुस्त्वितः प्रधाविता ततः प्राप्य पुष्पवृक्षकान् भक्षयति, मर्दयति च , ततः प्रधाविता इतः आगत्य पुष्पाणि

भक्षयति, मर्दयति च । एवमारामान्तरेव भ्रमति, ततो बहिर्नैव निर्गच्छति । अन्ते लघुं दण्डमन्विष्य तेन प्रताडितैव सा बहिर्निर्गता । ततो गोष्ठे नीत्वा त्वया सा बद्धा । ततस्तव मनस्येवं गर्वोऽभूत्- 'यद्यहमेवं गामारामात् बहिर्न निरगमयिष्यम्, गृहाराम एष सकल एव विनष्टोऽभविष्यत्' इति । तस्यामेव स्थितावेक: प्रतिवेशी युवा तत्र प्राप्त: । त्वमात्मगर्वं निगूहितुमशक्नुवान: तं दृष्ट्वैव स्वकृतमारामसंरक्षणकार्यम् विवृत्य श्रावयन्नेवाऽसी:, गोवत्सो मातु: सकलं दुग्धं निपीय प्रसन्न उत्प्लुत्योत्प्लुत्य क्रीडन् त्वत्समीपे आगत: । ततस्त्वं तं दृष्ट्वैव स्मृतगुरुवचन: यदा ससम्भ्रमम् दोह्यां गामुपागच्छ:, आमृशश्च तदापीनम् तदा त्वमवागच्छ: "वत्स: सर्वम् दुग्धम् निपीतवान् , आपीनं रिक्तमस्तीति" । इतोऽस्माकं पूज्यो गूरु: पञ्चामृताय दुग्धं प्रतीक्षमाण एव आसीत् । ततस्त्वं पूजामन्दिरस्य द्वारि स्थितं गुरुं दृष्ट्वाऽपि अदृष्टवानिव, तेनाऽहूतोऽपि अश्रुतवानिव भूत्वा गुरुभयात् मातरं गुरुपत्नीम् तन्निवेदयितुम् गत: । इतो गुरु: श्रीदामन् । श्रीदामन् । अये वधिर इति आक्षिप्य आह्वयन्नासीत् । ततो वयमपि 'किमर्थमेष शृण्वन्नपि न शृणोति इति बुभुत्सया त्वत्समीपेऽगच्छाम । त्वां भीत्वा, भयमलिनेन मुखेन, गुरुपत्न्या मुखं प्रेक्ष्य भित्त्याश्रयेण स्थितमपश्याम । तत: सर्वं वृत्तं वयमपि ज्ञातवन्त: । ततो माता गुरुपत्नी च बहिर्निर्गत्य स्वामिनम् अबोधयत् - "कार्यं कुर्वतो विघ्नो जात: किं करोत्वेष इति" । मर्मज्ञोऽपि कार्यविघातान् विमनस्को गूरु: प्रावोचत्- "अहं शीघ्र:, अहं शीघ्र: । शीघ्रस्य कार्यमीदृशं भवति ? इति । तच्छ्रवणानन्तरम् वयं वय:सुलभम् हास्यं रोद्धुम् नाऽशक्नुम: पूर्वं शीघ्र इत्युपाधिना सगर्वं पश्चात्तया सास्रं मलिनं च त्वन्मुखं दृष्ट्वा तु ततोऽप्यधिकं हसितुं वयमारब्धवन्त: । इतोऽस्मान् हसतो वीक्ष्य रुष्यन्निव गुरु: प्रावोचत्- "किमर्थं हसथ: विक्षिप्तचित्ता इव, हृष्टा: कार्यविघातो जात इति ?" तेन गुरुवचनेन तु प्रागपेक्षयाऽपि प्रगुणितमस्माकम् हास्यम् । ततो वयं तत्र गुरोरग्रतो वस्तुमपि अक्षमास्तत: पलाय्य गृहपृष्ठतो गत्वा सकुक्षिमर्दम्, सहास्याश्रुपातम् हसितुमारब्धवन्त: । तदा तथा भयेन शुष्कं, साश्रु, मलिनं च ते मुखमद्याऽपि मच्चक्षुषो: पुरत: स्फुरति इति"

एतेन स्मरणेन कृष्ण: श्रीदाम: च द्वावेव हसितुमारब्धन्तौ । हासमनु श्रीदामा प्रावोचत्- "आम्, आम् । गुरोर्वयं विभीम: स्म । तदा तु भयकारणं तज्जातमपि- "स्वस्याऽनवधानेन पूज्यस्य गुरो: पूजोपकरणस्यैव हानिरभवत् । अर्धमुष्टिमितेन दुग्धेनाऽपि पञ्चामृतं निष्पन्नं भवति स्म । तत्र तु दुग्धस्यैको बिन्दुरपि नाऽभवत् तत: कथं न बिभयानि कार्यं विहत्य ?" ।



कृष्णः श्रीदामा च केवलं द्वौ सखायौ कोष्ठे वसतः। सदैव पर्यायेणैकः किमपि कथयन् भवति, अन्यश्च शृण्वन् भवति। सायं प्रातर्दिवा च यथासमयं चोष्यैर्लेह्यैश्चर्व्यैश्च राजभोजनैर्भोजनैः, राजाच्छादनैराच्छादनैश्च कृष्णेन साधु सत्कृतः स श्रीदामा प्रासादे सुखमास्त। एवमूनत्रिंशद् दिनानि व्यतीतानि। तावत् समयपर्यन्तम् कृष्णस्यानुग्रहेण संपादनीयानि सर्वेषां सर्वाण्यपि कार्याणि व्यहन्यन्त। एकद्वजनवर्जम् न कोऽपि कृष्णस्य दर्शनम्, संपर्कम् लेभे। तेन सर्वोऽपि प्रासादकर्मचारिवर्गो विसिस्मिये, अन्तःपुरवर्गो विसिस्मिये। पौरजानपदवर्गो विसिस्मिये, किं बहुना द्वारकैव विसिस्मिये।

एकदा कृष्णश्चारप्रमुखं दर्शनार्थमुपगतमपृच्छत्- "काऽस्ति पौरेषु नवा चर्चा ?"

चारप्रमुखो विवक्षन्नपि न किञ्चित् वक्तुंशशाक। कृष्णस्तदभिप्रायं बुद्ध्वा प्रोवाच तम्-"मातङ्ग! इमं श्रीदामानं मम द्वितीयमात्मानमेव विद्धि। अस्याऽग्रतो नाऽस्ति किमपि निगूहनीयम्, अवक्तव्यं च। किमस्ति, विवृणु निःसङ्कोचम्।"

चारप्रमुखः "प्रभो! केचिद् वदन्ति- 'श्रीदाम नामकः कोऽपि मान्त्रिकः समायातः। यस्तथा लोकोत्तरप्रतापं कृष्णमपि एवममोहयत्, कोष्ठएव न्ययन्त्रयत्। उपमासार्द्धमासमपिकस्यचित् सख्युरातिथ्यं विधेयंभवति ?" इति।

अपरे वदन्ति- "नैतत्। न कोऽपि मान्त्रिकः कृष्णं मोहयितुं वशयितुं क्षमते। एतावन्ति दिनानि, कस्यचिदातिथ्येन नीयन्त इत्यादि विश्वसितुं नैव शक्यते। तेनाऽनुमीयते- अत्र केनाकपि निगूढतमेन रहस्येन भाव्यमेव "इति।"

अन्ये च वदन्ति- "नाऽस्ति किमपि रहस्यम्। कृष्णस्य सतीर्थ्यो दयितश्च सखा श्रीदामाऽभ्यागतोऽस्ति। एतौ गुरुकुले सहैव पठतः स्म। बहुना कालेन सङ्गतौ मिथः स्निग्धौ एतौ चिन्ताबहुलस्य गार्हस्थ्यप्रपञ्चस्य द्वारं संरुध्य, अकुतश्चिन्तस्य स्वच्छात्रजीवनस्य द्वारमुद्घाट्य तात्कालिकानि घटनाचित्राणि स्मृतिचक्षुषा समीक्ष्य साम्प्रतं विस्रब्धं तान्येव मिथो वर्णयन्तौ आनन्दन्तौ हसन्तौ तद्रसेन बाहीकं सर्वमेव प्रपञ्चं विस्मरन्तौ च भवेताम्। एतदेव संभवेत् याथार्थ्यमत्र।"

तत् सर्वमाकर्ण्य, चारप्रमुखं मातङ्गं विसृज्य प्रहसन् कृष्णः श्रीदामानं प्रोवाच-"सत्यमेव वदति लोकः। आवामधुना गुरुकुलवार्तानुस्मरणेन सत्यं विश्वमेव विस्मृतवन्ताविव स्वः। स्मृतमात्रं तच्छात्रजीवनं साम्प्रतमपि

आनन्दयतितमाम् मानसम् । स्मारं स्मारं त्वं तत्रत्याः कति घटना अकथयः, प्रतिदिनं ताः पृथक् पृथक् श्रुत्वाऽपि नैव जातुचिदपि मनस्तृप्यति प्रत्युत सोत्कण्ठं सोल्लासं पौनःपुन्येन नवनवास्ताः शुश्रूषत एव । त्वन्मुखतो गुरुकुलस्य वार्तां यदाऽहं श्रृणोमि, तदाऽहं श्रावं श्रावमेव क्वचिद्दूरे आनन्दलोके प्राप्य विस्मृतैहिक सर्वदुःखप्रपञ्चो भवामि ।"

कृष्णो विहस्य पुनः श्रीदामानं प्रोवाच-"यदा त्वं गुरुकुलवार्तामुपक्रमसे, तदा त्वामहं समीक्षमाणो भवामि-"तव मुखमन्यादृशमेव भवति, प्रसन्नमुज्ज्वलं स्फूर्तिमयं च । तथा तव स्वरस्तीक्ष्णो भवति । चक्षुषी उत्फुल्ले विस्फारिते च भवतः । एतानि लक्षणानि तवाऽन्तरिकं प्रमोदातिशयं व्यञ्जन्ति ।"

श्रीदामा- सत्यम्, प्रसन्नस्य मनसो भावः मुखे, चक्षुषोः, वाचि चाभिव्यक्तो भवत्येव, यावद् आवां गुरुकुलस्य ता आनन्ददा घटनाः स्मरामः ।"

कृष्णः-"नहिं, नहि श्रीदामन् । न केवलं गुरुकुलेऽस्मदनुभूताः सुखस्यैव घटना अद्य स्मृतिमागता अस्मान् आनन्दयन्ति, अपि तु तत्र घटिताः दुःखस्य घटना अपि सांप्रतं स्मृतिमागता मनसि कामप्यनिर्वचनीयाम् निर्वृतिमाविर्भावयन्ति । वरम्, 'दुःखस्य घटना' इति कथनेनाऽहमकस्मात् तां घटनामस्मरम् । त्वं स्मरसि ताम् ? ययाऽऽवां वनेऽप्राप्तमार्गौ भ्रमन्तौ एव रात्रिं नेष्यावः ?"

श्रीदामा- "काऽऽसीत्सा घटना ?" कृष्ण प्रोवाच- "तादृशीं घटनामपि त्वं व्यस्मरः ? आकर्णयाऽहं विवृणोमि ताम् । एकदाऽस्मत्पूज्या माता गुरुपत्नी आवाम् इन्धनाय वनं प्रैषयत् । आज्ञानुसारमावां प्रस्थाय वनान्तरे प्राप्तौ । तत्राऽवयोरिन्धनानि संचिन्वतोरकस्मात् प्रकृतिप्रकोपो जातः-"आकालिको घोरो झञ्झावातः प्रोवाह । काला मेघमालाऽऽकाशं व्याप । व्योमनि परः सहस्रा विद्युतः प्राकाशन्त । कर्णस्फोटका घोराः स्फूर्जथवः, स्तनितानि च वनभुवमेवाऽकम्पयन्त । तस्मिन्नेव क्षणे दिनमणिरप्यस्तं गतः । सन्ध्यायाः कालातिकालाच्छटा दिशो व्याप । मेघश्च घोरेण धारासंपातेन सर्वां वनभुवं जले निमज्जयामास । तस्यां विकरालस्थित्रौ तमसाऽऽच्छन्नदृशौ निरस्तदिग्ज्ञानौ चाऽवाम् पदात्पदमपि क्वाऽपि गन्तुमशक्तौ बलान्मिथोहस्तग्राहमपथेन गच्छन्तौ आकुलौ च क्वचिद् गर्ते, क्वचित्तीक्ष्णधारे प्रस्तरोच्चये, क्वचिज्जलगलिते मृदश्चये, क्वचित्कण्टकवीरुधि, क्वचिज्जलप्लावितस्थूणे च पतितौ, क्षतविक्षतौ, व्रणितौ च । सखे । स्मरसि कियता कष्टेन पूर्णामेव रात्रिम् तत्राऽन्धकारमये वने यापयिष्यावः, ततो विरतायां वृष्टौ, प्रातरुदिते च भगवत्यंशुमालिनि आवामन्वेषयितुं वने आगच्छन्तं शिष्यवत्सलं करुणावरुणालयम् पूज्यमस्मद्गुरुमावां द्रक्ष्यावः, तथा तथा निराश्रयौ लब्धातिकष्टौ चाऽवाम् तं

वीक्ष्यैवाऽश्वस्तौ च भविष्यावश्च। एतादृश्यः कियत्यो घटनाः सन्ति, याः स्मृते रङ्गमञ्चेऽभिनीय प्रदर्शिता इवाऽद्याऽपि मन उत्कयन्ति।"

श्रीदामा-"एवं गुरुकुलवार्ताया माजीवनमावृत्तायाम्, वर्णितायाम्, आकर्णितायामपि नैवाऽस्माकं मनस्तुष्यति। परमेतादृशीषु मनोविनोदिकासु अत एव प्रायः समययापनमात्रसाधनभूतासु घटनासु विस्मृतास्वपि न काचिद् भवति हानिः। सा तु हानिस्तत्र प्राप्तेष्वन्यान्येपू लोककल्याणैकसाधनभूतेपूपदेशेषु विस्मृतेषु भवति, तेष्वपि सर्वापेक्षया पूज्येनाऽस्मद्गुरुणा गृहाय लब्धानुमतिभ्यो गृहं प्रतिष्ठासुभ्यः समावृत्तेभ्योऽस्मभ्यम् प्रदत्तो यो दीक्षान्तोपदेश आसीत्, तस्मिन् विस्मृते तु न केवलं हानिः, अपि तु महाहानिरेव भवेत्, सांस्कृतिकस्य सर्वस्वस्यैव महाहानिर्भवेत्। स दीक्षान्तोपदेशोऽतिसारगर्भः, मानवताया अत्युन्नायकः, अतिविश्वक्षेमङ्करश्चाऽसीत्। तमिदानीमप्यक्षरशः कच्चित् स्मरसि त्वम्?

कृष्णः-"स्मरामि, किं न स्मरामि। त्वं न स्मरसि अक्षरशः?"

श्रीदामा-"किमर्थम् न स्मरामि? येन महानिर्धनोऽप्यात्मानं महासंपत्तिशालिनम्, महानिर्बलोऽपि महाबलशालिनम्, सारगर्भं स्मरामि, गर्वामि च। प्राप्तं, तत्तादृशमनर्धमक्षय्यमुपदेशवैभवमपि जागरूकः प्रवृद्धश्च कश्चिज्जनो विस्मर्तुं शक्नोति? तत्राऽपि त्वादृशो मादृशश्च आचार्यदेवो जनः?"।

कृष्णः-"तर्ह्येतदहं नवं सामयिकं च कञ्चित् प्रस्तौमि, त्वं समर्थयसे?"

श्रीदामा-"किन्तत् समर्थनीयम्?"

कृष्णः-"तव गृहनिवर्तनात् प्राक् तस्य स्तुत्यस्य, पूज्यस्य, अभिवन्द्यस्यच तत्र भवतोऽस्मदगुरोर्दीक्षान्तोपदेशस्य सकृदक्षरशः संस्मरणम् आवाभ्यां सश्रद्धं करणीयम्- 'त्वं पठ, अहमाकर्णयामि। अथवाऽहं पठामि, त्वमाकर्णय' एवं प्रकारेण।"

श्रीदामा-"साधु साधु। मत्तः ईदृक्षस्य प्रस्तावस्याऽसमर्थनम् कथं संभवेत्? समर्थये, समर्थये। एतदास्ताम्, अह्नायैव एष प्रस्तावः कार्ये परिणंस्यते।

किञ्च-मत्कृते साऽतिशयमेव हर्षस्याऽयं विषयो, यत्- एष त्वत्प्रस्तावो मदन्यसंशयग्रन्थिच्छेदाय त्वया सह प्रदत्तप्रश्नावसरतया नितान्तम् ममोपकारको जातः। यतोऽस्मत्पूज्यस्य तत्र गुरोः स दीक्षान्तोपदेशः कर्तव्य तथा मायातिक्रममागृह्णाति। परं मायाविषये प्रसङ्गगतम् यत्किञ्चित् यत्रतत्र प्रवचन्नपि, ऐन्द्रियकत्वेन यथार्थतया विश्वं स्वलक्षणम्, विनश्वरं, दुःखमयं च

जानन्नपि नाऽहमद्यावध्यपि मायां यथार्थं तयाऽजानाम्-काऽसौ माया ? कियानस्ति तत्प्रभावः ? कोऽस्त्यनैन्द्रियकः क्रियाकलापस्तस्य ? भ्रमज्ञानं बाधकं ज्ञानमिव, स्वाप्निकं ज्ञानं जाग्रद् ज्ञानमिव कीदृग्ज्ञानं तामञ्जसा प्रत्याख्याति ? केवलं 'स्वप्नवत्' इति परिभाषणेन माया नैव परिचीयते, नाऽहं पर्यचिनवम् । स्वप्नस्योपमां तु अनवबुध्याऽपि अहं ददानोऽपिभवामि । तत् कृष्ण ! माम् मायाम् परिचायय !"

कृष्णो विहस्य प्रत्यवोचत्- "त्वामहं स्पष्टतया परिचाययिष्यामि मायास्वरूपम् अचिरेणैव" ।



श्रीदामा- "कृष्ण । मां विसृजाऽद्य । अत्र विवसतो मम सार्द्धो मासो गतः । वर्षं वर्षाणि वा न्युषितेऽपि तृप्तिर्न भवति तव सङ्गमेन, गुरुकुलस्मरणेन, स्वच्छात्रजीवनचर्चया च । एतदेतादृशमेव भवति । अद्य कृतनित्यक्रियः कृतभोजनश्च अहं गृहं प्रतिष्ठे, अनुमन्यस्व । तवैवाऽग्रहेणैतावन्ति दिनान्यत्र न्यवसम् । इतस्तथाऽग्रहो मा भवतु ।"

कृष्णः-"नो, नो । परश्वो मम जन्मोत्सवोऽस्ति । तदनु गमिष्यसि । कुतोऽद्य तु प्रातस्तरामेवोत्थाय गृहमस्मरः । कश्चित्स्वप्नोऽपि कच्चिद् दृष्टत्वया तथा गृहस्मरणाय ?"

श्रीदामा-"नो नो, जनसेवोद्देश्येन ग्रामे, ग्रामान्तरे च कानिचन रचनात्मकानि कार्याणि प्रारम्भितान्यासन्-क्वचित् सेतोः, क्वचित् कुल्यायाः, क्वचिदौषधालयस्य । ममैव प्रोत्साहनया, प्रेरणया च कार्यकटिबद्धास्ते ते ग्रामबन्धवः किं वदेयुर्मामदृष्ट्वा ? सर्वे निराशा निरुत्साहा भवेयुः । तैरेव कार्यैर्बलादाहूतः साकृष्टश्चाऽहं गृहायैवं त्वरमाणोऽस्मि । एतद्वर्जं तत्राऽन्यान्यपि सन्ति बहूनि कार्याणि, तानि दिवाऽवकाशसमये व्याकरिष्यामि । अत्र तु केवलं द्वे कार्येऽवशिष्टे स्तः, ते अप्यद्य दिने समाप्तव्ये ।

कृष्णः- "के द्वे ?"

श्रीदामा-"मायया विषये प्रबोधनम्, दीक्षान्तोपदेशस्याऽक्षरशोऽनुस्मरणं च,

कृष्णः- "दीक्षान्तोपदेशानुस्मरणम् मज्जन्मोत्सवदिनमनु, तव गृहप्रस्थानात् पूर्वं करिष्यते "।

श्रीदामा- "तन्मायायाः प्रबोधनं तु ?"

कृष्णः- "अहं दास्यामि, तत्तव नैकमपि क्षणं ग्रहीष्यति । तावत् शीघ्रं त्वं मायां परिचेष्यसे"।

श्रीदामा-"तदेवाऽशासे । गच्छाम साम्प्रतं तु स्नानाय । सम-योऽतिर्वतते ।"।

कृष्णः- "अयमहम् तत्पर एवाऽस्मि । गच्छाऽग्रतः"

एवं संमन्त्र्य तौ स्नानार्थं प्रस्थितौ । प्रासादपरिसर एव पक्वेष्टकचिता, वक्षोदघ्ननिर्मलजला तत्र मनोज्ञा एका वापी आसीत् । तस्यास्तटे प्राप्य, एकैकं निम्बकाष्टखण्डमादाय तौ दन्तान्धावयितुं प्रारब्धवन्तौ । किञ्चित्क्षणानन्तरं

दन्तान्धावन्नेव कृष्णः समाप्तदन्तधावनं श्रीदामानं प्रो वान्- "प्रथमं त्वं जले प्रविश, स्नाहीति"।

ओमित्युक्त्वा श्रीदामा तस्मिन् वक्षोदघ्ने वापीजले स्नातुं प्रविष्टवान्। ततः स्नानमन्त्रोच्चारणपूर्वकं प्राग्जलेन मुखं प्रक्षाल्य स हस्तद्वयस्याऽङ्गुष्ठाभ्यां कर्णविवरद्वयं, मध्यमाङ्गुलीभ्याम् च नासारन्ध्रद्वयं संरुध्य " हर गङ्गे।" इति मातरं गङ्गां संबोध्य, संस्मृत्य, प्रार्थ्य च जले शिरो न्यमज्जयत्।

अघटितघटनापटीयसो दैवस्य किं, कदा, कीदृशं विलसितम्, ईहितम्, चरितं वा भवति को जानीते ? जलमग्नः सोऽकस्मात् पातालापरनाम्नो नागलोकस्य राजधानीं भोगवतीं प्राप। तत्र प्राप्तः सोऽतिमात्रं विसिस्मिये। स व्यचारयच्च- "केन शक्तिविशेषेणाऽहमत्राऽनीत" इति। नवम् कलियुगम् नवो लोकः, नवाकृतयो निवासिनः, नवं वातावरणम्। श्रीदामा भूयो भूयोऽचित्रीयत। तत्र प्राप्त एव स सर्वेषां नागलोकवासिनां कौतुकस्य दिदृक्षायाः, जिज्ञासायाश्च विषयो जातः। किञ्च- श्रीदाम्नः कृते स्वसंवेद्यं तत्राऽन्यत् एकं कार्यमपि महाश्चर्यावहम् जातम्-"नागलोकप्राप्त्यनन्तरमेवं वृद्धस्तपः क्लेशकृशः स श्रीदामा पुनर्युवा तेजस्वी मांसलो रुचिरश्च सञ्जातः। विलसद्यौवनो रुचिरदर्शनः स श्रीदामा तत्र सर्वेषाम् आकर्षको जातो विशेषतोऽसीमसौन्दर्याभिमानिनीनामुद्यद्यौवनमदमत्तानां सहस्रशो नागकन्यानाम्। भूलोकात्प्राप्त एष सुन्दरो युवा स्थानेन, मानेन, वैभवेन चाऽस्माभिः सत्कर्तव्य इति धारणावन्तः सर्वे नागलोकवासिनस्तं श्रद्धितवन्तः। किं बहुना तम् राज्यमेव सत्करणीयमभिनन्दनीयं चाऽमन्यत। राज्यतः प्रासादपरिसर एव तन्निवासायैकं रत्नमयं हर्म्यं प्रादीयत, तदावश्यक- सेवोपचारस्य पर्याप्तमात्रायां सेवकाश्च न्ययुज्यन्त।

अकल्पनीयमेव भवति दैवाचरितम्- नागलोकं प्राप्त एव श्रीदामा स्वं कलत्रपुत्रादिकम्, मित्राणि, प्रियं करुषदेशं च स सर्वमेव भूलोकगतं विसस्मार पूर्वजन्मवृत्तान्तमिव। परमीदृशं विस्मयावहं स्थितिपरिवर्तनमपि बलवत् संस्कारगतत्वेन नो शशाकाऽन्यथयितुं तस्य विश्वभावनाम्। सैवैका स्फुरति स्म यदा कदा तस्य स्मृतौ।

एवं गतेषु तत्र बहुतिथेषु मासेषु नागलोकराजकुमार्याः प्रमीलाया विवाहाय स्वयंवरः संपत्स्यमानो बभूव। राजकुमारी प्रमीला भूलोकजनसौन्दर्यप्रातिनिध्यं कुर्वन्तं कामसुन्दरं तं श्रीदामानं हृदा कामयते स्म। राज्ञा स्वयंवराय कुलीनाः संपन्नाश्च बहवो युवान आमन्त्रिताः। राजकुमार्या हृद्भावं जानता राजप्रासादेन स्वयम्वरार्थमामन्त्रितैर्युवभिः सह श्रीदामाऽपि स्वयंवरस्थल आमन्त्र्योपस्थापितः। राजकुमारी प्रमीला च श्रीदामकण्ठं

स्वयंवरमालयाऽलङ्कृतवती । एकमासानन्तरम् शुभदिने, शुभमुहूर्तेऽपूर्वेण समारोहेण तयोर्विवाहोऽपि संवृत्तः । यौतकत्वेन प्राप्तैर्मणिमाणिक्यरत्नोच्चयैर्दासदासीनिवहैश्च श्रीदाम्नो निवासहर्म्यम् व्याप्यत, राजकुमारीप्रतिष्ठासंरक्षणाय निवासहर्म्यद्वारे सशस्त्रो रक्षिगणश्च न्ययुज्यत । तत्समयात् श्रीदामस्थितौ महत्परिवर्तनम् जातम् । प्रागिव, अर्वाक् जनाः साधारणास्तेन अप्रतिहतगति, अप्राप्तपूर्वस्वीकृति सङ्गन्तुं, संलपितुं च न शंक्नुवन्ति स्म । गृहीतपूर्वस्वीकृतिकाः, सप्रयोजनाः, उच्चस्तरीया अल्पे एव भद्रपुरुषास्तमुपगच्छन्ति स्म । श्रीदामाऽपि गाम्भीर्येण, मर्यादया, कौलिन्येन, राजसम्बन्धेन च नियमित इवोच्चैः स्वल्पैरेव सङ्गच्छते मिलति, संलपति स्म च ।

नागलोकः सर्वसौख्यसौविध्यशाली, देवैरपि सदा स्पृहणीयोच्चवैभवसनाथो लोक आसीत् । नानारत्नमणिमाणिक्यचयप्रोज्ज्वल एष लोको न कदाचिदपि दारिद्र्यदैन्यान्धकारलेशमनुभवति स्म । तत्रत्यैश्वर्येण श्रिया चाऽवधीरितदेवराज एकदुहितृमात्रापत्यो नागराजः स्वां दुहितरं प्राणेभ्योऽपि प्रियां मन्यते स्म । तत्सम्बन्धेन जामातरं श्रीदामानमपि पुत्रीयते स्म । तेन तयोर्द्वयोः पितृपुत्रभावो मिथः स्नेहवात्सल्यपोषादिवोत्तरोत्तरं वरीवृध्यमान आसीत् । इतो नागराजश्चोत्तरोत्तरमात्मानं वार्धक्यजर्जरितम्, क्षतशक्तिकम्, कालव्याधशरव्यीकृतं च मन्यमानो राज्यायोत्साहसाहसहीनो भवन्नासीत् । तेन दुहितृविवाहात्सप्तमे मासे बृद्धो नागराजो वहु चिन्तनमनु, बहुविचारविमर्शमनु च जामातुः श्रीदाम्नः स्कन्धयोर्नागलोकस्य राज्यधुरं निधित्सुरेवं तं प्रास्तौत्- "प्रिय पुत्रायित जामातः ! इतस्त्वय्येवेमं गुरुं राज्यभारमपि न्यस्य स्वयमात्मनो वार्धक्यं भाररहितं वीतक्लेशं विधित्सामि । इमा मत्प्रजा स्वप्रजावत् स्नेहेन, वात्सल्येन, धर्मेण, विवेकेन, न्यायेन च पालय इति" । श्रीदामाऽपि श्वशुरस्य तां प्रस्तुतिम् सहर्षं स्वीचकार ।

ततः प्रस्तावानुसारम् राज्यहस्तान्तरणाय राजकीया घोषणा जाता । महता समारोहेण श्रीदामा राज्यसिंहासनमधिष्ठापितः । राष्ट्रियधर्मसंस्कृत्यनुसारम् विधिवत् राज्ञः श्रीदाम्नो राज्याभिषेको जातः । सविक्रमं ससाहसं राज्यसञ्चालनाय वयसाऽसमर्थतामुपगतस्य राज्ञः सिंहासने समर्थः, सोत्साहः, विक्रान्तश्च युवा राजा स्थानापन्नो व्यराजत इति प्रजासु ससन्तोषो महान् उत्साह उदपद्यत । मागधा बन्दिनश्च नवं राजानं स्तोतुमुपचक्रमिरे । तस्यां स्थितौ राजा श्रीदामा तान्मागधबन्दिनः आत्मनस्तुतिनिषेधायैवं निर्दिदेश- "भो मागधबन्दिनः ! अहमस्मि नवो राजा राज्ञः कर्तव्यक्षेत्रे प्रमुखतया न्यायधर्मविवेकैः प्रजानां शासनम्, रञ्जनं,

हिताधानम्, राष्ट्रस्य स्थायित्वप्रदानम्, प्रतिष्ठासंवर्धनम् चेत्येतानि कार्याणि भवन्ति । यद्योग्यतायाः, निष्ठायाः, सत्यसन्धतायाश्च बलेनैतानि कार्याणि कियति परिमाणे संपद्येरन् अथवा नैव संपद्येरन् ? इत्यात्मनैवाऽहं परीक्षणीयोऽस्मि । यद्यहं परीक्षायामुत्तीर्णो भवेयम् तदैव मम प्रशंसा स्तुतिर्वा कर्तव्या, न साम्प्रतम्, स्तुत्यविषयस्यैवाऽभावात् । राजत्वेनैव प्रशंसायाः स्तुतेश्चाभिलाषो मूर्खतायाः, अभिमानस्य च विज्ञापनं भवति 'राष्ट्रप्रजयोः कियत् कल्याणं करोति ?' सूक्ष्ममेतदनवलोक्यैव स्तुतिः स्तावनं च स्तुतस्तावकयोर्द्वयोरेव विवेकभ्रंशं व्यनक्तः। क्रमशो लालाटिकतामभि धक्कयन्ती सैषा कुपरंपरा जनानां गुणानवधीरयन्ती, अवगुणांश्चाऽर्हयन्ती राज्यमेव कुनीतिगर्ते दुरुदर्के पातयिष्यति । तेन यदि पश्चात् मत्कार्याणि स्तुत्यानि समीक्षेरन्, तानि स्तोतुं यूयं लब्धानुज्ञा भविष्यथः । साम्प्रतम् विरमताऽस्मात् स्तवात्"।

अथ मागधबन्दिभिः राजा न स्तूयते ? एषाऽपूर्वा निषेधाज्ञा राज्यमेव प्राभावयत् । आत्मनो वृथास्तुतिमनिच्छन् एष राजाऽवश्यं राष्ट्रप्रजयोर्बहु कल्याणं विधास्यतीति चर्चाऽऽराज्यमेव पप्रथे । तत्सम्बन्धे सर्वत्रैव श्रद्धाया विश्वासस्य च वातावरणमसृज्यत । अस्यां स्थितौ भूतपूर्वो वृद्धो राजा नवं राजानं श्रीदामानं प्रत्यवोचत्-"पुत्रायित ! नागलोकेऽत्र यो यो नवो राजा भवति, राज्यं सञ्चालयिष्यता तेनाऽत्मनो नीतिघोषणा कर्तव्या भवति, प्रजाः संबोध्य"। तदिमां चिरन्तनीमस्मत्परंपराम् मा विच्छिन्धि । प्रजा नवां नीतिघोषणां श्रोतुं प्रतीक्षमाणाः सन्ति ।" ।

ततोऽपरेद्युरेवैका राजप्रासादविज्ञप्तिर्बहिः प्राकाश्यत । "आगामिसप्ताहस्य प्रथमदिने, मध्याह्ने राज्ञो नीतिघोषणा भविष्यति इति । तया विज्ञप्त्या सर्वाः प्रजा हृष्टाः सोत्कण्ठाश्च सञ्जाताः । निश्चिते दिने, निश्चिते समये सर्वाः प्रजाः स्वकार्याण्यपि विसृज्य राज्ञो नीतिघोषणामाकर्णयितुं दत्तचित्ता अभूवन् । राज्ञो नीतिघोषणा एवमासीत् -

"मम प्रिया राष्ट्रवासिनः !

भूतपूर्वस्य राज्ञो वार्धक्यजादसामर्थ्याद्राज्यसञ्चालनभारो मत्स्कन्धयोरापतित इति नाऽस्त्यविदितम् सर्वेषाम् । अतोऽहं राज्याय साम्प्रतम् स्वां नीतिं व्याचिख्यासुरस्मि । परम् प्रजानां भक्तितो राज्ञो वात्सल्यतश्चाऽस्मद्राष्ट्रे यदस्ति राजप्रजयोः सौमनस्यरूपं वैशिष्ट्यम्, तत्संरक्षणशक्तिलाभायैव सर्वप्रथममहं साम्बं सदाशिवं प्रार्थये । ततो नीतिविषये- राजनीतिकक्षेत्रे राज्येनाऽङ्गीकृतां प्रवर्तमानां चैतामेव स्वराज्यप्रणालीं संरक्षितुम् उत्तरोत्तरं विकासयितुं च मम सर्वकारः प्रयसिष्यति ।

सामाजिक क्षेत्रे सैवाऽस्माकं प्रचलिता सामाजिकनीतिसंहिताऽपरिवर्त्या भविष्यति, या गुणकर्मविभागवशात् समाजे विभिन्नासु जातिषु वर्णेषु वर्तमानेष्वपि तान्सर्वान् सामान्यसत्तादृशा समानेव पश्यति, सकलं यद्यादृशं वा कार्यम् भवतु, नैव कस्मिंश्चिदपि जने भेदनीतिं प्रयुङ्क्ते जातितो, वर्णतो लिङ्गतो वा।

आर्थिक क्षेत्रे राष्ट्रस्य समृद्धये प्रतिष्ठायै च राष्ट्रियमूलनीत्यविरोधेन राष्ट्रियप्रश्ने नखमांसवत् मिथो मिलित्वाऽपि वैयक्तिकससमृद्धयेऽहंपूर्विकया प्रातिस्विकान् पृथक्पृथगुद्योगान् वितन्वताम् राष्ट्रियभावनावताम् राष्ट्रवासिनां प्रयासेन सांप्रतमस्माकं राष्ट्रं विश्वस्मिन्नन्य राष्ट्रापेक्षया संपन्नं समृद्धिमच्चाऽस्ति। तेनैतामेव क्लृप्तोपकारां स्वतन्त्रामुद्योगनीतिं राष्ट्रक्षेमाय मत्सर्वकारो द्रढयिष्यते। किञ्च- इमम् अस्मद्राष्ट्रियार्यनीत्यादर्शं पालयतोऽन्यान् राष्ट्रविशेषांश्चार्थसाहाय्येन योजयन्तीमिमां स्वां राष्ट्रियार्थनीतिपरंपरामेव मत्सर्वकारो यथायथं सम्यक् सञ्चालयिष्यते।

परराष्ट्रनीतौ मत्सर्वकारो देशस्य सार्वभौमिकतायाः, स्वतन्त्रतायाः, धर्मस्य, संस्कृत्याः, परंपरायाश्च स्वं गरिमाणं संरक्ष्य सर्वै राष्ट्रैः सहास्तित्वाधारे मैत्रीमुदारतापूर्णं सामञ्जस्यं च स्थापयितुं कामयिष्यते। किञ्च- विश्वस्मिन् राष्ट्रान्तरापेक्षयाऽस्मद्राष्ट्रवैशिष्ट्यप्रकाशिके विश्वमानवजाते-राकाङ्क्षाविषयीभूते संपन्नतामुक्त्योर्द्वे भावने कार्ये परिणमयन्तं विश्वस्तुत्यम् महान्तमस्मद्राष्ट्रादर्शमनुपालयतां देशानामस्तित्वस्य प्रतिष्ठायाश्च संरक्षणाय सहयोगपरां स्वां परराष्ट्रनीतिपरंपरामेव मत्सर्वकारो प्रढयिष्यते। एकस्मिन् विश्वशान्ति विषये एव मम सर्वकार इतः स्वां नवां नीतिं सञ्चालयिष्यते। तद्यथा-

विश्वशान्तयेऽस्मद्राष्ट्रमिव विश्वस्याऽन्यान्यानि राष्ट्राण्यपि यथाशक्त्य चेष्टन्त, प्रायतन्त च। तथात्वेऽप्यद्यावध्यपि असौ विश्वशान्तेरध्यसायकथायाः स्वप्नस्यैव वा विषयो भवन्नस्ति। तत्साफल्यस्य स्वल्पातिस्वल्पाऽपि संभावना नैवाऽदरीदृश्यत। सार्धमेव तदसाफल्यस्य कारणमपि नाऽन्यन्मार्गभ्रमादित्यपि निर्णयोऽबोभूयत। यतः कोऽपि जनो न पूर्वां दिशमभि प्रस्थाय पश्चिमतः स्थितं ग्रामं प्राप्तुं शक्नोति। तेन विश्वशान्तिलक्ष्यस्य प्राप्तेर्विषये मम सर्वकारः एवं चिन्तयन्नस्ति - "यावदत्र विश्वस्मिन् एको जनोऽन्यं जनम्, एकः समाजोऽन्यं समाजम्, एकं राष्ट्रमन्यद्राष्ट्रं मित्रदृशाऽत्मदृशा वा द्रष्टुं, मिथस्तथा व्यवहर्तुं च नोपक्रमते, तावद्विश्वशान्तेरुदयो नैव संभवति। यावच्च संस्कृतवाङ्मयनिष्ठां विश्वबन्धुत्वभावनां, विश्वभ्रातृत्वभावनाम्, विश्वात्मैक्यभावनां वा विश्व मानवा नो शिक्षन्ते, तावत्तेषु मिथो भ्रातुत्वधीः, बन्धुत्वधीः, आत्मधीश्च

नैवोत्पद्यन्ते । तेन सर्वप्रथमं विश्वशान्तिलक्ष्यपूर्तयेऽपरिहार्यस्य विश्वबन्धुत्वस्य, विश्वभ्रातृत्वस्य, विश्वात्मैक्यस्य दृशम् सृष्टौ सर्वप्रथममुन्मेषयित्री औपनिषदिकी भावनैव विश्वमानवैः कार्ये परिणमयितव्येति । तत्तदर्थे मम सर्वकार एतं पञ्चसूत्रीयं कार्यक्रमं सञ्चालयिष्यते-

(१) नागलोके केन्द्रीयविश्वशान्तिशिबिरस्य संस्थापनम्

(२) अनुमन्तृष्वन्येषु राष्ट्रेष्वपि विश्वशान्तिशिबिरशाखाऽप्रशाखानां संस्थापनम् ।

(३) तेषां राष्ट्राणामन्तेवासिनाम् विश्वशान्तिशिबिरकार्यकर्तृत्वयोग्यता संपादनाय वैदिकविद्यभिषिक्तराजन्यशासिते नेपाले महर्षियाज्ञवल्क्य-दृष्टेशावास्योपनिषदाधारितस्य विश्वशान्तिपाठ्यक्रमस्याऽध्ययनाय, तत-संबन्ध्यन्यकार्यक्रमपशिक्षणाय च प्रेषणं तद्व्यवस्थापनं च ।

(४) प्रशिक्षितेभ्यस्तत्तद्राष्ट्रान्तेवासिम्यस्तत्तद्राष्ट्रेषु संस्कृतशिक्षाविकासस्य तथा संस्कृत भाषानिष्ठाया विश्वभावनायाश्च प्रचाराय दृढातिदृढं निर्देशनम्, व्यवस्थापनं च ।

(५) विश्वशान्तये विश्वमानवानां यद्येकैव भाषा भवेत्, तर्हि संयुक्तेन स्वरेण भगवन्तं प्रार्थयितुं, समविचारेषु जनेषु मिथो मन्त्रयितुम्, अज्ञान् बोधयितुम्, स्मारयितुं, प्रतिगामिनोऽनुलोमयितुम्, विघटितान् संघटयितुं चैकान्ततः सौविध्यं भवेदिति हेतोरितरभाषापेक्षया सर्वकल्याणभावनासंपन्नत्वेन निर्विशेषं सर्वराष्ट्रैः सर्वविद्वद्विशेषैरादृतत्वेन, कस्यचिज्जातिविशेषस्य, राष्ट्रविशेषस्य, समाजविशेषस्य च स्वत्वान्तर्गतत्वाभावनैशिष्ट्येन च संस्कृत भाषाया एव विश्वभाषात्व संपादनायाऽविश्वं प्रचारः, प्रबोधनम्, व्यवस्थापनं च ।

अत एतं पञ्चसूत्रीयं कार्यक्रमम् सम्यक् सञ्चाल्य, विश्वशान्तिस्थापनाभियाने स्वराष्ट्रस्य नेतृत्वं सफलीकृत्य, तस्य प्रतिष्ठासंवर्धनाय सर्वाणि राज्याङ्गानि, सर्वाःप्रियाः प्रजाश्चैकमत्येन, सहयोगेन च मत्सर्वकारं प्रोत्साहयिष्यन्ते, सबलयिष्यन्ते चेत्यहं दृढमाशासे । भगवान् साम्बसदाशिवः सर्वानस्मान् रक्षतु"

अनया घोषणया नवे राजनि मन्त्रिणः प्रजाश्च सर्वेऽन्वरज्यन्त । सोऽपि शास्त्रोक्तेन विधिना राज्यं कर्तुमारेभे । पञ्चषेभ्यो मागधवन्दिभ्यः स्वाम् स्तुतिं वारयन् राजा श्रीदामा तेनैव कारणेन कोटिशो नागलोकवासिनां स्तुतिभाजनमजायत- व्यतीत पञ्चसहस्राब्देऽच कलियुगेऽपि अस्माकमेवं धर्मराज्यप्रियः स्तुतिनिरपेक्षो राजेति

किञ्च- दीनारादिपणैः प्राणिपणैश्च क्रीडताम् द्यूतकृतां समिथःसंलापैः, रात्रिजागरणैः, मद्यपानां निष्कारणैर्मत्तकलहैः, दाम्भिकानां धर्माचार्याणाम्, धर्मप्रचारकाणां पूजार्चनादिमिथ्याचारप्रपञ्चैः, विविधैषणाप्रेरितानां पौराणां स्वार्थसाधकक्रियाकलापप्रतिस्पर्धाप्रकारैश्चाऽकलियुगोचितया शान्त शून्यया

स्थित्याऽऽत्मानमकृतकृत्यामिव, सर्वोपेक्षितामिव च मत्वाऽन्तःखिन्ना (राजधानी) एका भोगवती श्रीदाम्नः सौ राज्यादर्शजनितेनाऽन्यराष्ट्रातिशायिना गरिम्णा निरस्तखेदा प्रहर्षिता चाऽसीत् । तथाऽन्या भोगवती (पातालगङ्गा) च मूर्ताभिरन्तः पुरश्रीभिरिव शतशः सुन्दरीभिः राज्ञीभिर्दासीभिश्च सदा सञ्चाल्यमानाया राज्ञो जलक्रीडापरंपराया विच्छेदात् आत्मानमनादृतामुपेक्षितां च मत्वाऽन्तः खिन्नाऽपि सहस्रशो यज्ञस्तूपैः पवित्रिताशेषतटभागत्वात् अपूर्वगर्वगौरवानुभवेन सातिशयमेव प्रसन्नाऽऽसीत् ।

एवं धर्मन्यायविवेकैः प्रजारञ्जनेन राज्यं शासतः श्रीदाम्न ऊनपञ्चाशत् वर्षाणि व्यतीतानि । तस्य सुशासनेन नागलोको राजन्वानभूत् । राजा श्रीदामा च प्रजाप्रियत्वेन विश्वविश्रुतः, पुत्रपौत्र प्रपौत्रादिसन्ततिवृद्ध्या बहुकुटुम्बी, बहुप्रपञ्चश्च समजायत ।

ईदृश्यामेव स्थितावेकदा बहुकार्यश्रान्तो राजा श्रीदामाऽन्तःपुरे विश्राम्यन्नासीत् । तदैव त्रिचतुर वर्षीयस्तस्य प्रपौत्रो रुदन् तत्सविधे समागतः । राजा तमाश्वासयितुं सान्त्वयितुं च परिरभ्य समस्तकोन्नयनम् अपृच्छत्- 'केन रोदिषि वत्स !' इति ।

यस्याऽस्तित्वमेव नाऽसीत्, स बालकः किं तं प्रतिवक्तु ? वापीजलादुन्मज्जयत् श्रीदाम्नस्तत् मस्तकोन्नयनम् वापीतटे दन्तान् धावन्तं कृष्णम्, पूर्वतो विशालं गगनचुम्बिनं कृष्णप्रासादम्, तत्परिसरे विरलविरलान् निविडपर्णान् फलपुष्पशाखिनश्च दर्शयत्, क्षणात् प्राक् स्नानाय वापीं प्रविष्टस्य, दैवात् नागलोकं प्राप्तस्य च तस्य मिथ्यानागलोकसंबन्धम् सामस्त्येनैव विच्छेदयामास, स्वप्नायितं स्मृतिशेषं च कारयामास ।

ततः श्रीदामा स्वप्नलोकात् जागर्तिलोकम् प्राप्त इव सद्योऽतितराम् विसिस्मिये । स जलादुत्ततार, वाप्यास्तटे प्राप, एकदृष्ट्या कृष्णं ददर्श च ।

ततो दन्तान् मार्जयन्नेव विहसन् कृष्णस्तं पप्रच्छ-"किं त्वम् तद् राज्यमिव स्वं (स्नानोत्तरं कार्यम्) नित्यस्तवमपि अत्यजः ? स्नात्वाऽपि तमनुच्चर्यैव केवलं मामेकदृष्ट्या पश्यसि !' ।

श्रीदामा- 'अरे ! किं करवाणि स्तवम् ? मम त्वधुनाऽऽत्मनो मन एव स्वस्थाने नाऽस्ति !'

तत्छ्रुत्वा कृष्णः साट्टहासं प्रोवाच-"इतस्तु पर्यचिनोः ? मायाम् कति वर्षाणि राज्यमकरोर्नागलोकस्य ?"

श्रीदामा साञ्जलिः सहर्षाश्रुनेत्रश्च विहसन् प्रत्युवाच- "माया पते ! तां मायामपि पर्यचिनवम्, त्वामपि पर्यचिनवम् । ऊनपञ्चाशत् वर्षाणि राज्यं कृत्वा नागलोकतो निवर्तमानोऽस्मि" ।



अद्य द्वारकानगरी चित्रविचित्राभिः पताकाभिरात्मानं विभूष्य, नवनवैर्वसनैराभरणैश्च पौरांश्चाऽलङ्कृत्य, श्रुतिमधुरैः सच्चरितगीतैः, मनोहरैस्तल्लीलाभिनयप्रदर्शनैः, जनानाममितहर्षोल्लासैश्च भगवतः कृष्णस्य जन्मोत्सवसमारोहमुत्कर्षयन्ती ऊर्जयन्ती विशेषयन्ती चाऽसीत् ।

अद्य प्रासादे प्रातःसमयादेव भगवतः कृष्णस्यार्थे सुस्वास्थ्य-दीर्घायुष्यसमृद्धीनां कामनया केचन ब्राह्मणा मन्त्रान् जपन्तः सन्ति, केचन वेदान् पठन्तः, केचन देवताः प्रीणयितुमर्चयन्तः, सुगन्धिभिः पावनाभिः समिद्भिर्होमद्रव्यैश्चाऽग्नौ जुह्वन्तश्च सन्ति ।

तेनाऽचैकतः पावनो होमधूमः प्रसर्पन् सर्वेषां घ्राणेन्द्रियाणि तर्पयति, अन्यतो भगवन्तमुपश्लोकयितुं तच्चरितं गायतामभिनयतां वादयतां च गीतनृत्यवदित्राणां सुमधुरो लयो जनानां कर्णान् पीयूषवर्षेण पूरयति, अपरतश्च स्वाध्यायव्रतनिष्ठानिर्धूतपाप्मनामनूचानानां वरिष्ठश्रोत्रियब्राह्मणानां संयुक्ताः श्रुतिमधुराः पावना वेदध्वनयो भगवत्याशीःप्रदानपुरःसरं विष्वक् सर्वाभ्युदयकारिणीं विश्वभावनां सन्दिशन्ति ।

अस्यां स्थितावपि तौ कृष्णश्रीदामानौ अन्तःपुरे एवं संलपन्तावेवाऽस्ताम् । वार्ताप्रसङ्गे कृष्णः श्रीदामानमवोचत्-"अद्याऽन्तःपुर हर्षोल्लासरमणीयो मे जन्मोत्सवदिवसोऽस्ति । तथाऽपि मामकीनं मनो नाऽद्याऽस्ति प्रसन्नम् ।"

"कस्य हेतोः"- श्रीदामा तमपृच्छत् ।

"त्वं श्वो गमिष्यसि इति"- कृष्णः प्रत्युवाच ।

"ईदृशः सखिस्नेहोऽपि मायाविलास एवेति हातुं न शक्येत ?"- श्रीदामा तमपृच्छत् ।

कृष्णः-"अस्थाने तवाऽयं पर्यनुयोगः । व्यावहारिकक्षेत्रे लोकसंग्रहाय जनैः कतिविधाः संबन्धाः स्थापनीया भवन्ति । तेष्वपि सख्यसंबन्धस्तु मुख्योऽपरिहार्यश्च भवत्येव । यः संकटसमये जनानां प्राणस्यैव रक्षको भवति । स कथं हातुं शक्यते ? सर्वापेक्षया विश्रम्भस्थानं भवति क्षेमङ्करः सख्यसम्बन्धः । तथा-चोक्तम्

न मातरि न दारेषु न सोदर्ये न चात्मजे ।<br>विश्रम्भस्तादृशः पुंसाम् यादृङ् मित्रे निरन्तरे । इति ॥

श्रीदामा विहस्य प्रोचे-"विक्रमेण, शक्त्या, प्रतिभातिशयेन च विश्वमेव प्रभावयतो महेच्छस्य महाप्राणस्य च तेऽशक्तोकिञ्चित्करश्च मत्संबन्धः किं यद्वा क्षेमङ्करो भवेत् ?"

कृष्णः- नो, नो, नो । त्वमेतावदपि न जानीषे । कतिभिः प्रकारैः सखा सख्युः क्षेमङ्करो भवितुं शक्नोति ? सांप्रतम् त्वं केवलमागमनेनैव, मम क्षेमङ्करोऽभवः ।

श्रीदामा-"कथम् ?"

कृष्णः-"शृणु । अहमात्मनो विषमाभिः समस्याभिर्बहु चिन्तित आसम् । तदैव त्वमागतः । त्वय्यागते त्वया रहः संलापात् ताः सर्वाः समस्या अहं व्यस्मरम् । तेनैतावन्ति दिनानि निश्चिन्तमेव अनयमपि । तदहं ब्रवीमि-त्वामन्तरेण अन्यस्मिन् कस्मिंश्चित्, देवराजे इन्द्रे आगतेऽपि, आगते एवं द्वारं रुद्ध्वा, मिथो रहसि संलप्य एतावन्ति दिनानि नेतुमहं शक्नोमि ? तथा कर्तुमर्हति ?"।

श्रीदामा-"तवाऽपि पीडाप्रदाः कास्ताः समस्याः ?"

कृष्णः-"अहं कथयामि । आत्मन एवं गुप्तां वेदनाम्, अर्थात् छिद्रम् अहमन्यं कञ्चित् हृदयमुदघाट्य प्रदर्शयितुं शक्नोमि ? त्वदृते । त्वामभिव्यज्य तु लघवे क्षणाय निश्चिन्तोऽपि भवितुं शक्नोमि । उक्तमेवास्ति-

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
स्वामिनि सौहृदयुक्तेनिवेद्य दुःखं सुखी भवति ॥

शृणु, मम चिन्ताविषयाः समस्यास्तु बहव एव सन्ति, तत्राप्येकाऽस्ति अतिविषमा दुःसमाधेया च । अत्राऽस्ति यादवकुकुरभोजान्धकवृष्णीनां संयुक्त एकः सङ्घो राज्यसंचालनाय । तस्य सङ्घस्य प्रमुखोऽप्यहमेवाऽस्मि । परमेतेषां नास्त्यैकमत्यम् । एते मिथोऽहङ्कुर्वन्ति, गर्वन्ति, भिद्यन्ते, अपरज्यन्ते च । तदेकतायाः, सामञ्जस्यस्य, समन्वयस्य च मार्गे एतेषां प्रवर्तनाय सदा मे प्रयासोऽस्ति । परमेतेषां बुद्धिमान्द्यात् अप्रबोधात् वृथादर्पाच्च नाऽस्म्यहं सफलः । एतेषामनेनैव वैमत्येन, तन्मूलकनियमव्यवस्थाराहित्येन च तानि सर्वाणि राज्यानि अराजकानीवोत्तरोत्तरं प्रजादुःख कारणानि सञ्जायमानानि सन्ति । एतासां सर्वासामप्यनवस्थानां दोषः सङ्घप्रमुखत्वेन ममोपर्येवाऽस्ति। ईदृश्यामतिविषमायां स्थितौ नैकोऽपि मम सहायकोऽस्ति । यो हृदयेन मह्यं साहाय्यं दित्सेत् । तत्र भवान् ममाऽग्रजः संकर्षणः केवलं स्वस्यैव बले गर्वति । नाऽन्यत् किञ्चित् दिदृक्षते । ज्येष्ट आत्मजः प्रद्युम्नः स्वस्य सौन्दर्येणैव मत्तोऽस्ति, सोऽपि नैव किञ्चिद् दिदृक्षते मत्समस्याम् । अहमस्मि एकः

नि:सहाय: किंकर्तव्यमूढश्च । तव सङ्गमात्, गुरुकुलवार्तासंस्मरणेन सर्वमेतद्विस्मृतमासीत्, तत्पुनरिदानीमुद्धृतम् प्रसङ्गेन ।"

एवं तयोः संलपतोरेकः परिचारकः कृष्णमुपगम्य प्रोवाच-"प्रभो ! तुलादानसमयो जातः , पुरोहितो गर्ग आह्वयति" ।

तच्छ्रुत्वा कृष्णः श्रीदामानं प्रोक्तवान् "गच्छावाऽधस्तात् । अद्येदृशमेव भवति" ।

ततस्तावन्तःपुरतो नीचैः प्राङ्गणेऽवतीर्णौ । यत्र महदुच्चं तुलायन्त्रं निखातमासीत् । तत्र पुरोहितो गर्गः कृष्णं प्रोवाच- "तुलायन्त्रस्य द्वयोस्तुलयोरेकस्यां भवान् निवसतु । अन्यस्यां प्रागुपकल्पितो द्रव्यराशिर्निधीयते । ततो भारसमत्वाय पर्याप्तमपर्याप्तं किं भवेत् विचार्यते ।

पुरोहितवचनानुसारमेकस्यां तुलायां कृष्ण उपविष्टः । अन्यस्यां प्रासादेन प्रथममेव कृतोत्सर्गा द्रव्यराशिर्न्यधीयत । तदुपरि सर्वाः कृष्णमहिष्यः प्रतियोगिताभावेनैवाऽत्मनोऽङ्गादुन्मोचमुन्मोचं स्वानि स्वर्णाभरणानि निहितवत्यः । तस्यां क्रमशः पञ्चषैर्भारिकैर्दुर्वोढासु द्रव्यराशिषु निहितास्वपि अन्या कृष्णाधिरूढा तुला भूमिं नैव तत्याज । तेन सर्वे दर्शका व्यस्मयन्त, मिथः समलपंश्च- "कियदद्भुतमेतत् चक्षुषोर्गोचरं जातमिति" ।

एवमाश्चर्यमयस्थितौ, सर्वासु राज्ञीषु विलक्षासु चिन्तितासु च कृष्णो रुक्मिणीमवोचत्-"भद्रे ! कुत्राऽस्ति सोऽवशिष्टः पृथुकः ? मम सख्या श्रीदाम्नोपहृतः ? शीघ्रमानीय तं तस्यां तुलायां निधेहि, त्वरितम्"।

तथेत्युक्त्वा रुक्मिणी अवशिष्टं पृथुकमानाय्य यावत् सपोटलिकमेव तं साभरणायां तुलायां निदधाति, तावदेव गरिमातिशयेन सा तुला नीचैरवारुरोह । अन्या कृष्णाध्युषिता च सा तुला तथैवोपर्युद्गता, यथा पूर्वमन्यत-रोद्गताऽऽसीत् ।

अनया घटनया तु दर्शका विस्मयसागरे एव निमग्नाः । सूक्ष्मं समीक्षका मनीषिणश्च मिथ एवं कर्णे समलपन्-"भक्तप्रतिष्ठां रिरक्षिषुणा विवर्धयिषुणा च भक्तवत्सलेन कृष्णेन दरिद्रोपनीतं पृथुकोपहारं हृदा परिहसन्तीषु स्वराज्ञीषु तद्गर्वदलनाय विहितो मनोवैज्ञानिकः प्रतिकारोऽयम्" इति ।

तस्मिन् दिने संपन्नेऽपि तुलादाने, संपन्नेष्वपि चाऽन्येषु जन्मोत्सवविधिषु कृष्णोऽन्तः पुरं प्रविश्य विश्रमितुं स्वस्य परममित्रेण श्रीदाम्ना रहः संलपितुं च नैवशशाक । यतो गतागतस्य नैरन्तर्यात् तदा प्रासादपरिसरे सोपायनां हार्दिकीं शुभकामनां समर्पयितुं कृष्णेन संजिगमिषूणाम् व्यां विशेषाणाम् समूहोऽनवरतं तावानेव भवति स्म, नैवापचीयते स्म स्तोकमपि । तस्मात् समागतेभ्यस्तेभ्यो दर्शनावसरं प्रदाय, तदानीतानि

महार्हाण्युपायनानि सश्रद्धाप्रदर्शनं स्वीकृत्य, धन्यवादैस्तान्सन्तोष्य, कुशलप्रश्नेन समादृत्य, तैः सस्मितं क्षणं संलप्य च भगवतः कृष्णस्य तद् दिनम् मित्रेण श्रीदाम्ना सह स्नेह-संलापावसरमप्राप्यैव गतम्। तत्स्थाने सन्ध्या समागता। द्वारकायाम् तस्य दिनस्य सायं सन्ध्याऽपि कृष्णजन्मोत्सवसमारोहेणैव बलवत्प्रभावितेव आनगरि प्रोद्दीपिताभिर्दीपावलीभिरुद्द्योतितमुखमण्डलेव शुक्लशुभ्राम्बरेव, विरलदृश्यतारकाङ्कित गगननीलशाटीका नवयौवनमारुरुक्षन्ती रमणीव च लोकैर्व्यलोक्यत। तस्मिन् सन्ध्योपलक्ष्येऽन्तःपुरे राज्ञ्यः, सेवकाश्चाऽहंपूर्विकया कृष्णस्य चरणौ ववन्दिरे। तत्कालमेव कृष्णः श्रीदामा च संयुक्तस्वरेण दीपज्योतिरनमस्यताम्-"शुभं भवतु कल्याणमारोग्यं सुखसंपदः। सर्वदुःखविनाशाय दीपज्योतिर्नमोऽस्तु ते" इति।

सन्ध्यावन्दनकार्यक्रममनु स्वं प्रस्तावं स्मारयन् कृष्णः प्रोवाच–"श्रीदामन्! कच्चित् स्मरन्नसि मत्प्रस्तावम्?"

श्रीदामा-"स्मरन्नेवोऽस्मि। श्वः प्रातः स्नानसन्ध्यादिकं निर्वर्त्य, पवित्रीभूय, गुरुचरणौ संस्मृत्य, दीक्षान्तोपदेशानुस्मरणं कृत्वा च मया गृहं प्रत्यपि तेनैव सन्मुहूर्तेन प्रस्थातव्यम् अस्ति। परमेष निर्णय इदानीमेव भवतु-"श्वस्तं दीक्षान्तोपदेशं त्वं पठिष्यसि किं वा श्रोष्यसि?"

कृष्णः-"अस्तु, अहं श्रोष्यामि"।

तदनु शुभकामना प्रदान व्याजेन समागतेनोद्धवेन क्षणं रहसि संलप्य, तं विसृज्य, कृष्णः श्रीदामानम् प्रावोचत्– "कीदृशोऽस्ति संबन्धस्तव सांप्रतम् करूषाधिपतिना? मया किञ्चित् कर्तव्यं, वक्तव्यं वाऽस्ति? सांप्रतं तु नास्ति पीडा काचित् ततः?"।

श्रीदामा– "नाऽस्ति, सर्वत्रैव वार्तमस्ति, सांप्रतम्"

कृष्ण– "तर्ह्यस्तु"



यद्यपि श्रीदामा कृष्णश्च स्नेहेन मिथः संश्लिष्टौ पृथक्शरीरावपि एकात्मानौ आस्ताम्। तथापि तस्य स्नेहस्य प्रकृतिं मूल्यं च विशेषतस्तदैव तौ विदितवन्तौ, यदा द्वारकायां संयुज्य तौ वियुक्तौ। वियोगसमये द्वावेव तौ वाष्परुद्धकण्ठौ मलिनमुखावास्ताम्। तेन श्रीदाम्नः प्रस्थानानन्तरम् एव द्वावेव तौ पश्चात्तेपतुः– "श्रीदामा गृहप्रस्थानसमये "प्रस्थितोऽहं पुनःसङ्गमाय" इति शिष्टभाषया मया कृष्णो व व्य आसीत्, तदा तावद् व ुमपि नोऽशकमिति"। कृष्णश्च-"गृहं प्रतिष्ठासुः श्रीदामा प्रस्थानसमये पुनः कदाऽऽगमिष्यसि इति शिष्टभाषया मया प्रष्टव्य आसीत्, तदा तावत् प्रष्टुमपि नोऽशकमिति"

मार्गे, गृहमभि प्रतस्थुषो रथस्थस्य श्रीदाम्नश्चक्षुषोः पुरतो जातु कृष्णस्य परदुष्प्रधर्षम् विक्रान्तं व्यक्तित्वम् स्फुरति, जातु तदन्तःपुरे रत्नस्वर्णाभरणभूषितानां सविनयानां कृष्णस्य राज्ञीनाम् समर्यादम् गतागतम् आविर्भवति। जातु वनमार्गे रोमन्थायितैर्हरिणैरध्युषितम् तत्सविधे तच्छावकैरुत्प्लुत्योत्प्लुत्य क्रीडितम् च दृश्यम् नृत्यति। जातु च घासं चरता महिषीयूथेन, गोयूथेन च सनाथा विशाला शाद्वला भूमिः सन्निकर्षति। जातु च मार्गे कर्मयोगसाधनैकलक्ष्यः, कर्मयोगभावनामग्नः, कर्मयोगैकदृष्टिः श्रीदामा प्राकृतजडजीवनानां वृक्षादीनामपि मौनाचरितेषु कर्मयोगस्यैव प्रभावं भावयन्नन्तः प्रहृष्यन् मनसा पृथक् पृथक् तानेव संवोधयन् वक्ति-"हे वृक्षाः। धन्याऽति धन्याऽस्ति युष्माकं सैषा कर्मनिष्ठा। द्वन्द्वसहता, गुणातीतता च। स्वस्य प्रियाणि पत्राणि, शाखाश्च च्छिन्दतोऽपि जनान् साहं साहमपि यूयं फलेन, पुष्पेण, छायया च निष्कामभावेन सेवध्वे। नो वर्षाः, नो आतपः, नो वा शैत्यम् युष्माकं कर्मनिष्ठाधैर्यम् विचालयितुमलम्। जातु कामं कम्पयन्तु, उन्मूलयन्तु, पीडयन्तु, खण्डयन्तु च युष्मान् प्रकम्पनाः, झञ्झावाताः, भूकम्पाश्च। तथात्वेऽपि नैव ते युष्माकमनासक्तां कर्मयोगसाधनामन्यथयितुं क्षमन्ते। धन्याःस्थो यूयम्"। अये। मम प्रिया नदीनदाः। धन्यातिधन्याः स्थो यूयमपि। यतः किं तज्जीवनम्? कश्च तस्याऽऽदर्शः? इति प्रश्नयोःसंयुक्तममुत्तरं यूयं स्वकार्येणैव नीरवं प्रददतः स्थः-"प्रगतिरेव जीवनम्, अनासक्ता निष्कामा कर्मपरायणतैव जीवनस्याऽऽदर्श इति"। अव्यक्तात्ममिर्वस्तुतः सात्मभिर्युष्माभिः प्रशिक्षितः सातत्यगमनादर्श एव मनुष्य जन्मनां सकलानामेव प्रत्यगात्मनोऽन्वर्थयति। अस्माकं प्रातः स्मरणीयाः पूर्वे ऋषयो महर्षयश्च युष्माकं सर्वेषु जीवेषु, सर्वेषु क्षेत्रेषु च वर्तमानं समभावम्, आत्मानं कलुषयत्सु,

अवहेल्य निष्ठीवत्सु, निनदत्सु अपि युष्माभिः क्रियमाणं निष्प्रतिकारम् सेवाभावम्, स्वयं परिशुष्याऽपि करुणया परान् आर्द्रयन्तं युष्माकमात्मसमर्पणादर्शं च प्राक्स्वयं साक्षात्कृत्य, अवगत्य च मन्ये- 'जगतः शाश्वतहिताय कर्मयोगशास्त्राणि ते पश्चाद् व्यरचयन् । यतः सर्वेभ्य ऋषिभ्यो महर्षिभ्यः शास्त्रेभ्यश्च यूयमेव ज्येष्ठाः अनुशासकाः प्रशिक्षकाश्च । धन्याः स्थो यूयम् ।।

मार्गे एवमेकाग्रमनसा भावयन्तं श्रीदामानं रथमवरोध्य सारथिर्दारुकः सविनयं सस्मितं च प्रोवाच-"महाशय ! इतः परम् रथो गन्तुं न शक्नोति ।" क्रमशो मार्गगतानां विभिन्नराज्यानां जनपदानां च राजमार्गानतिक्रम्य, करूषदेशं प्राप्य तत्राऽपि यं प्रदेशं यावत् रथो गन्तुं शक्नोति श्रीदामानं प्रापय्य निवर्तस्व" इति यो भगवतः कृष्णस्याऽदेश आसीत्, तमहमन्वपालयम् । तदनुजानीहि मां निवर्तनाय"।

श्रीदामा-"साधु, साधु । तर्हि तावत् स्थापय रथम्, यावदहमवतरामि । गच्छ, सपरिवाराय कृष्णाय मत्प्रणामं निवेदय ।"

तथेत्युक्त्वा तं श्रीदामानं सहस्तावलम्बं रथादवतार्य, नमस्कृत्य, आमन्त्र्य च सारथिर्दारुको न्यवर्तत । ततः श्रीदामा पूर्ववत् अवलम्बितप्रसेवो मन्दं मन्दं गच्छन् स्वग्रामं प्राप । तत्र प्राप्त एव स मार्गे "स्वगृहस्थ दीनां स्थितिं यथावत् कृष्णं निवेदय" इति गृहिण्या साग्रहमुक्तंवचनमक्षरशः सस्मार । तेन दीर्घं निःश्वसन् चिन्तयामास च-"तां किं ब्रवाणि" इति ।

एवं मनसा चिन्तयन्, संकुचन्, क्लाम्यन् च स स्वगृहान्तिकं प्राप, सपदि विसिस्मिये, विषसाद च-"तत्रत्येन नवेन दृश्येन" ।यतः स ददर्श- "तस्य जीर्णं कुटीरम् पूर्ववदेवाऽस्ति । किन्तु तेनैव संयोज्यैकं चतुर्भूमिकं सुन्दरं विशालं-चैकं हर्म्यं नवं निर्मितमस्ति । तस्याऽग्रत एकं नवनिर्मितं लघु सुन्दरं चोद्यानमप्यस्ति ।"

"किमाश्चर्यमेतदिति" स तत्रैवैकस्य निम्ववृक्षस्य मूले उपविश्य, स्वं प्रसेवमेकतः प्रक्षिप्यैकदृष्ट्या तद् हर्म्यं पश्यन्, विषीदंश्च तर्कयामास- "अहमुपमासद्वयं सख्युः कृष्णस्याऽग्रहेण द्वारकामध्यवसम् । तदभ्यन्तरे को निर्घृणो धनिक आगत्य, मम गृहवाटिकामतिक्रम्य, तत्रैवैतावत् विशालं हर्म्यं निर्मितवान् । यस्य पार्श्वे मम कुटीरम् शून्यं, रिक्तं, रुदित्वा श्रान्तमिव मलिनमस्ति । हन्त ! मम दारा अपत्यानि चैतस्य हर्म्यस्य विभवानलार्चिषा तप्ता इव सन्तप्ता न जाने रुदन्तो निराश्रयाः क्व गताः । धिक् किमापतितमीदृशम् विधुरम् । क्वाऽन्वेषयाणि तान् वराकान् । कः सूचयेन्मां तेषामुदन्तम् ?"

सविषादमेवं चिन्तयत्येव श्रीदाम्नि, तस्माद् विशालाद् हर्म्यात्सुचारुवेषा द्वित्रा बालका निर्गत्य बहिरुद्यानसमीपे क्रीडितुमारब्धवन्तः । तत् क्रीडास्थलम् निम्बवृक्षात् तथा दूरे नाऽसीत् । तथाऽपि वयः सुलभेन दृष्टिशक्तेर्ह्रासेन, परिवृत्तेन वेषेण तथा तादृशहर्म्यान्निष्क्रमणेन च श्रीदामा तान् बालकान् नैव पर्यचिनोत् । क्षणेन यावत्तेषां बालकानं दृष्टिः स्वतो निम्बवृक्षमभि पपात, तावदेव ते ससम्भ्रमं, साम्रेडं च तारस्वरेण मातरं समाह्वयितुमारभन्त-मातः । अस्मा कं पिताऽऽगतः, बहिरागच्छ "इति" । श्रीदामा ततोऽपि भूयो विसिस्मिये-"क एतेषां पिताऽत्रागतः ? अवश्यमेतेषां पिता हर्म्यपतिरेव भवेत्, यदा हर्म्यान्तः स्थिताम् मातरमेते समाह्वयन्ति ।, एतेऽपि तस्मात् हर्म्यादेव निर्गताः ।"

ततो बालकशब्दश्रवणानन्तरमेव कर्णयोः स्वर्णकर्णिके, ललाटे स्वर्णललाटिकाम्, नासापुटे हीरकोज्ज्वलाम् स्वर्णपुष्पिकाम्, कण्ठे स्वर्णग्रैवेयकम्, मुक्तावलीं च, हस्तनाड्योः स्वर्णकङ्कणे, अङ्गुलीषु रत्नोज्ज्वलानि स्वर्णाङ्गुलीयकानि, भुजयोर्मणिखचिते स्वर्णाङ्गदे, कट्यां काञ्चनीं काञ्चीम्, चरणयोर्नूपुरौ एवमङ्गेषु यथार्हाणि भूषणानि महार्हाणि वसनानि च परिदधाना पञ्चषाभिर्दासीभिरनुगम्यमाना एका नारी हर्म्यान्निर्गत्य ससम्भ्रमं श्रीदामानमुपभेता । सा नारी श्रीदाम्नः सहधर्मिणी सुशीलाऽऽसीत्, ते बालकाश्च तदपत्यानि । सुशीला सस्मितं पत्युश्चरणौ ववन्दे । सविनयं पप्रच्छ च-"तत्र भवान्, अस्माकं भाग्यविधाता कृष्णः सपरिवारः कुशली आस्ते ? इति" ।

श्रीदामा-"कुशली आस्ते । सर्वं मङ्गलमस्ति तत्र" ।

सुशीला-"जयोऽस्तु तस्य, कल्याणं भवतु । अथ किमर्थमत्र वसति भवान् ?"

श्रीदामा-"कस्येदं हर्म्यम् ?"

सुशीला-"अस्माकम्"

श्रीदामा-"केन कदा निर्मितमेतद्गृहमस्मत्कृते ?"

सुशीला-"आः किमेवं श्रूयते ? चित्रीयेऽहं भवत्प्रश्नमाकर्ण्य !"

श्रीदामा-"किमर्थम् ?"

सुशीला-"किं भवतः श्रीकृष्णस्य च संयुक्तेच्छया नैतन्निर्मितम् ?" निर्माणाय समागताः कुलकाः, स्थपतयः, कर्मकराः, श्रमिकाश्च सर्वे "भवद्भ्यां द्वाभ्यामेव वयं प्रेषिताः स्मः" इति कथयन्ति स्म ।"

श्रीदामा-"नो, नो, नो । के निर्मितवन्त एतत् ? के के आगता अत्र ?"

सुशीला-"के के इति तु कथं तानहं परिचिनुयाम् ? परम् ते बहव आसन् । ते कथयन्ति स्म"- अस्मान् तयोरादेशोऽस्ति-"आवश्यकवस्तून्यादाय गच्छत । एकेनैव मासेन, कथञ्चिदशक्तौ सार्धेन मासेन तु गृहनिर्माणकार्यम् समाप्तव्यमेव" "इति" । एकः सप्ताहो जातः । सर्वं निर्माणकार्यं समाप्य यथागतं ते निवृत्ता अपि" ।

श्रीदामा-"आम्, अवगतं मया मायापतेश्चरितम् ।"

सुशीला- "किमर्थमत्र ? गृहं गच्छाम, कीदृक् निर्मितम्, तच्च पश्याम ।"

श्रीदामा- "अयं पश्यन्नस्मि अस्मादेव स्थानात्"

सुशीला- "किं दृश्यते इयतो दूरात्, बहिः स्थित्वा अन्तरेव प्रविश्य परितो विलोकनीयम् । अभ्यन्तरे संहत्य पञ्चाशत् कोष्ठाः सन्ति हर्म्यस्य चतसृषु भूमिकासु .। वाचनाय, शयनाय, सग्धये, सपीतये, उपवेशाय, जनसंपर्काय, कोषाय, पूजार्चनादये च पृथक्पृथक् एव कोष्ठाः सन्ति शूकधान्यशमीधान्ययोः संग्रहाय च । गृहस्य पश्चिमतोऽतिथिगृहम् पृष्ठतः गवां पालनायैकम् बृहत् गोष्ठं च स्तः । तत्रेदानीम् क्षीरिण्यश्चतस्रः सुकरा गावः सन्ति । यद्यत्र निधेयं भवति, तत्सर्वं निहितमस्ति । कोषोऽपि वैभवपूर्णोऽस्ति"

तदाकर्ण्य श्रीदामा सुशीलां प्रोवाच-"क्षणमेतान् सर्वान् अतोऽपसारय, केवलं त्वया रहः संलपामि" ।

सुशीला-"गच्छाव, गृहाभ्यन्तर एव संलपाव" ।

श्रीदामा-"प्रथममपसारयैतान् सर्वान्"

तदाशयानुसारम् सुशीला सर्वानपसार्य निकटे दत्तकर्णा श्रीदाम्नो वाचं प्रत्यैक्षत । ततः श्रीदामा सुशीलां प्रोवाच- "भद्रे । कृष्णस्याऽनुग्रहेणेतो युष्माकं सुदिनान्यायातानि । यूयं निश्चिन्ता आनन्दिता अभवत । इत एवमेव युष्माकं जीवनं सुखेन यास्यति । एतन्नकेवलं युष्माकमेव, अपि तु ममाऽपि हर्षस्यैव विषयोऽस्ति । आस्तामेतत् । किञ्च- यत्त्वम् 'गृहं प्रविश्य सर्वं निरीक्षस्व' इति वदसि, तन्मत्कृते नोपयु मस्ति । तव सांप्रतिकगृहस्थितिवर्णनेनैव मम हृदि प्रहर्षो जातः । त्वत्कथनानुसारम् गृहाभ्यन्तरे प्रविश्य तस्याऽमितस्य वैभवस्य साक्षात्कारे कृते तु प्रहर्षोऽप्युद्रिक्तो भविष्यति । तथा हर्षोद्रेकानुभवो मम कर्मयोगसाधनां विहन्ति ॥ एतादृश आनन्दमार्गो मत्कृते निरोद्धव्य एव भवति । यतो मया तु कर्मयोगं सिषाधयिषता सर्वस्यां स्थितौ समेन भाव्यम् संपत्तौ विपत्तौ च ।

किञ्च- वस्तुतो हर्षस्य विषयोऽपि नास्त्येतत् । सर्वं क्षणभङ्गुरमस्ति । त्वं तु प्रबुद्धा मम मनोवृत्तानुसारिणी चैतादृशे मिथ्याप्रपञ्चे वेदं वेदं मा बलात्

मां प्रवेशय। मत्कृते तु सैव जीर्णा कुटी मनोज्ञा, सौविध्यपूर्णा, शान्तिदायिनी चाऽस्ति। तत्रैव एकद्वान् कटान् निवसनाय, शयनाय चाऽस्तृणु। कामोपभोगपरमाः प्राकृताः सामन्ता इव पर्यङ्के शयितुं, सामन्तभोजनवत् भोक्तुं च नाऽस्ति मदाकाङ्क्षा।

सुशीला- "भवान् न प्रविशति चेत् मया कथम् प्रवेष्टव्यम् तत्र ?"

सुदामा- "तव हृदयं जानानोऽहम् 'त्वमेवमेव वदिष्यसीति' पूर्वमेव ज्ञातवानस्मि। परम् एतादृशान्यपत्यानि सन्ति। यूयं तत्रैव निवसत। यथाप्राप्तमुपभुज्य समयं यापयत।"

सुशीला- "एतत्त्वहमजानाम्। तथाऽपि सकृत्तु भवान् स्वबालकान् आदाय तत्सर्वं विलोकयतु, गृहं प्रविश्य। बालका हृष्यन्तु"।

श्रीदामा- "एवं प्रबुद्धाऽपि, पुनः पुनः स्मारिताऽपि तदेवाऽगृह्णासि ? अहं तत्र न प्रविविक्षामि। मा आगृहाण। वरमासन्ना सूर्यास्तमयन वेला। तत्त्वरितं सज्जय निवासोपकरणानि। सायं सन्ध्या तत्रैवाऽनुष्ठेया भवति।"

ततस्तथेत्युक्त्वा पत्युः आग्रहात् खिन्नेव, निरुत्साहेव, उदासीनवदना सुशीला द्वे दास्यौ आहूय, ताभ्याम् जीर्णं तद् गृहं सममार्जयत्, अलेपयत्, कटास्तरणादिभिरसज्जयच्च। श्रीदामाऽपि तत्रैवोपेत्य शान्त्या विशश्राम। बालकाश्च उपमासद्वयमनु समागतं स्वं पितरम् पर्यवृण्वन्। सुशीलाऽपि अविलम्बनीयं संस्मृत्य, संभ्रम्य चैकं पत्रं श्रीदाम्ने ददती प्रोवाच- "पञ्चषदिनपूर्वम् राजप्रासादूत आगतमेतत् किञ्चिदात्ययिकं भवितुं शक्नोति" इति आशङ्क्य मयोन्मोच्य मुद्राङ्कितम् संवेष्टनम् विलोकितम् एतत् पत्रम्। अवगतं चाऽस्यैतत् तात्पर्यम्- "आगामिनि भाद्रमासे सर्वकारो बृहत् विद्वत्संमेलनं कारयिष्यते। तस्य सभापतित्वं भवता कर्तव्यम्। तदर्थं दशदिनाभ्यन्तरे राजप्रासादसचिवेन प्रमुखेन साकं संपर्को विधेय इति।"

श्रीदामा- "अस्तु, समयोऽस्ति। पञ्चषदिनान्तरे तेन संगमिकष्ये।



राज्ञः स सत्कारः, युगनायकेन कृष्णेन स सख्यभावः, तेनैव च तावान् वैभवलाभः । एतैर्द्वित्रैः कारणैः स्वस्य, स्वकुलस्य चाऽभ्युदयाकाङ्क्षावताम् "कर्तव्यो महदाश्रयः" इति धारणावतां वैयक्तिकस्वार्थं सिषाधयिषूणाम्- धनानि समर्ज्य सुखेन जिजीविषूणाम्, शत्रून् विजिगीषूणाम्, प्रतिपक्षतः स्वं, संपदं, प्रतिष्ठां वा रिरक्षिषूणाम् अथवा स्वार्थगर्भैः सेवाकार्यैः समाजे यशस्काम्यतां च जनानाम् आश्रयस्य, साहाय्यस्य च स्थानमितः श्रीदामा जात इति ग्रामग्रामन्तरस्थैरिततस्त्यैश्च सर्वैं जनैरमन्यत ।

इतो निष्कामतयाऽनास तया, प्रपञ्चभीततया च श्रीदाम्नो मनः स्थिति स्तदनुकूला नाऽसीत् । यतः स जनसंपर्कात् बिभेति स्म, यथासंभवम् पलायते स्म, निलीयते स्म च । केवलं सार्वजनिके एव कर्मणि स सक्रियो भवति स्म, तत्संबन्धिभिर्जनैरेव सञ्जिगमिषते स्म च । यदि तादृशैस्तथाविधैरेव जनैरपि सङ्गम्येत, अहोरात्रे नैकः क्षणोऽपि तस्य ध्यानाय, चिन्तनाय चाऽवशिष्यते । तेन सार्वजनिककार्यविशेषे एव सङ्गमो भवितेति भित्तौ विलिख्य सार्वजनिकी सूचना देयेति च परामर्शः प्रदत्तस्तस्मै कैश्चित् । परं श्रीदामा तदप्ययुक्तमेवाऽमन्यत । यतो जनाः संजिगमिषया, दिदृक्षया दूरदूरतः सोपायनाः सोत्कण्ठाः समायान्ति । असंपृच्छ्यैव तेषाम् निवर्तनम् सत्यममानवीय एव व्यवहारो भवेदिति" । तदैवमेव व्यावहारिकं कष्टमासीत्तस्य ।

अस्यामेव स्थितौ बराहग्रामात् रामचरिताभिनयस्य प्रबन्धकास्त्रिचतुरा नवयुवकाः श्रीदामानं द्रष्टुमागताः । परिचित्य तान्, श्रीदामा सादरं पप्रच्छ- "कोऽस्ति विशेषः ?" इति ।

ते सहर्षम् श्रीदामानं प्रोचुः- "भवन्निर्देशेन श्रीरामचरितमभिनीय ग्रामे ग्रामे दर्शयन्तः स्म । अस्मदभिनीतम् कीदृशं जातम्, सकृत्तु स्वयं भवता निरीक्षितव्यम्" "इति सादरमामन्त्रयितुं वयमद्याऽत्र समागताः" ।

श्रीदामा- "साधु, साधु । भवतां विवृत्या महान् हर्षो जातः । स कार्यक्रमश्चलत्वाराज्यमविरतमेव । किञ्च- मदागमनविषये तु वच्मि- "वृन्दाग्रामे औषधालयनिर्माणस्य कार्यम् साम्प्रतमेव समापनीयमेवाऽस्ति । तदसमाप्याऽहं न क्वाऽप्युपस्थातुं शक्नोमि । तेन संभवेत्, मासान्तरे एवाऽहं तत्रोपस्थातुं शक्नोमि । आगमिष्यन्नहमेव समयं सूचयिष्यामि । रङ्गमञ्चवेषभूषादि सज्जापूर्वकम् तस्य जनहितकारिणो महतः कार्यक्रमस्य सञ्चालनाय क्वचिदस्त्यवरोधोऽपि कश्चित् ?" ।

नवयुवका:-" आसीदेवाऽवरोधोऽभिनेतॄणां कृते उपयुक्त वस्त्रभूषणा-भावेन । परं दैवात् सा समस्याऽपि समाहिता ।"

श्रीदामा-"कथं समाहिता ?"

नवयुवका:-"सर्वकारस्य साहाय्येन । "रामचरिताभिनेयाय यावदावश्यकमुपकरणं सर्वकारो दास्यतीति राजप्रासादसचिवालयत एव पत्रमागतम्," तत्सर्वं निष्पन्नमपि । अस्माकम् नाटकम् सरसास्वादम् सपरिजनो राजाऽपि व्यलोकयत । दर्शनानन्तरं प्रहृष्टो राजा प्रत्येकमभिनेतृभ्य: सहस्रं सहस्रं रूप्यकाणि पारितोषिकत्वेन प्रादात्, नाटकसञ्चालनाय पृथक् पञ्च सहस्राणि रूप्यकाणि च ।

श्रीदामा- "अहो । एतच्छ्रुत्वा तु हृदय एवाऽसंमिमान इवाऽभून्मम प्रहर्ष: । यतस्तथा राज्याश्रये प्राप्ते तु भवतां स पुण्य: कार्यक्रम आराज्यमञ्जसैव सञ्चालयिष्यते । भगवतो मर्यादापुरुषोत्तमस्य श्रीरामस्य चरित्रमाराज्यं प्रचारयितुं सहायक ईदृश: सर्वकारो भाग्येन लभ्यते । अतो राष्ट्रस्य यच्छाश्वतं हितं भविष्यति, तस्य श्रेयोऽस्मै राज्ञे, युष्मभ्यं राष्ट्रहितायाऽत्मानं समर्पयद्भ्यो युवकेभ्यश्च इतिहासो दास्यति । नवयुवका: विहस्य प्रोचु:-"सत्या असत्या: कतिविधा: किंवदन्त्योऽत्र चलन्ति ।" ।

श्रीदामा-"कीदृश: किंवदन्त्य: ?"

नवयुवका:-"अस्य कार्यक्रमस्याऽराज्यं सञ्चालनाय प्रथमं भवान् राज्ञा प्रेरित:, तदनु भवता वयं प्रेरिता:" इति दृढा बहिश्चर्चाऽस्ति । निवेदनीयं त्वेतत्-"श्रेय:प्राप्तिविषये राज्ञा भावीतिहासो नैव प्रतीक्षितव्य: । जना अद्यप्रभृत्येव तस्मै श्रेयो ददत: सन्ति" इति ।

श्रीदामा- "नो, नो, नो । जनता यस्मै कामयेत, तस्मै श्रेयो ददातु । परमस्माकं पुण्य एष कार्यक्रमोऽविहतम् आराज्यं चलतु इत्येव वाञ्छितव्यमस्माभि: ।

एवं संलपत्सु तेषु सुशीला श्रीदामानमुपगम्य प्रोवाच-"सौवीरात् पञ्च जना:, नीलकुण्ठग्रामात् द्वौ जनौ च भवन्तं द्रष्टुम् आगता: सन्ति । तेषु नीलकण्ठग्रामीणौ रहसि मिलितुं वाञ्छत: ।"

श्रीदामा उद्विग्न इव विमना इव तां प्रोवाच-"अरे । अद्य तु पाठायाऽपि समयो न जात: । केन संगच्छै, केन वा न संगच्छै ? मम तु सर्वैव साधना विहन्यमानाऽभूदनेन विधिना । एकां घटीम् प्रतीक्षणायताननुरुणद्धि । अहं क्षणं चिन्तयामि, परिदेवयानि च मनसा द्वारकायामेव, कृष्णाग्रत एव प्राप्य ।"

एवमुक्त्वा स सुशीलाम् विसृष्टवान् । ततो बद्धासनः स नेत्रे निमील्य मनसा द्वारका प्राप्य कृष्णाग्रतः स्वां परिदेवनां नीरवम् श्रावयितुं प्रारभत - "सखे कृष्ण ! अतिनिर्धनतया गृहसमस्याभिश्चिन्तिता मद्गृहिणी सखायं धनं याचितुं मां द्वारकां प्रैषयत् । त्वद्दर्शनाकाङ्क्षयाऽहमपि द्वारकां प्राप्तः । प्रभूते धने प्राप्ते तन्मे मनःस्थितिं विकारयेत् इति संभाव्य नाऽहं त्वां धनमयाचम् । यत इमं विश्वप्रपञ्चं क्षणिकं मायाविलासं जानन् अहं राजानं त्वां वा किं धनं याचै ? परमहं यावत्तव प्रासादे न्यवसम् उपमासद्वयम्, त्वया मम गृहस्थितिः प्रष्टव्याऽऽआसीत्, त्वं नाऽपृच्छः एकं शब्दमपि । सार्धमेव, त्वं मयि स्वं स्नेहमेवमदर्शयः तन्न तवाऽन्तः पुरवर्गो न द्वारिकावासिनः अपि तु करूषदेशवासिनश्च याथार्थ्येनैव एवं विविदुः मयि तत्र निवसति न भूमिपतयः, न सामन्ता, न कर्मचारिणः । नैकेनापि तव दर्शनम् प्राप्यत । तावन्ति दिनानि मया, रहः संलप्यैव तव गतानि । तेनाऽहं गृहं निवर्तमानो मार्गेऽपि व्यचारयम् - मयि तथा स्नेहपरोऽपि सखा कृष्णः "प्रभूतं वित्तं दत्त्वा, क्षणभङ्गुरे मिथ्यामायाप्रपञ्चे भ्रमयित्वा मयाऽस्याऽजीवनं कृता कर्मयोगसाधना, तपश्च नैव विहन्तव्ये इति विचार्यैव मद्गृहस्थितिं नापृच्छदिति"। तेन ममाऽध्यात्मिके जीवने त्वया कृतां करुणां स्मारं स्मारं, स्तावं स्तावम् वर्णयं वर्णयमहं स्वगृहोपकण्ठे प्राप्तः । परं तत्र प्राप्त एवाहम् दृष्टवान् सकलं ज्ञातवांश्च - "मायापतिना त्वयाऽविदितमेव मम कृते विशालम् सकलैश्वर्यधनधान्य समृद्धिमत् हर्म्यं निर्मापितम् । मद्गृहिणी महार्हरत्नस्वर्णाभरणैर्भूषिता, बह्वीभिर्दासीभिर्दासैश्चाऽनुगमिता, अपत्यानि सुभोजनहृष्टपुष्टानि स्वच्छमहार्हनववेषाणि च कारितानि । कोषश्चाऽमितवैभवैः संपूरितः ।"

एतेनैकतो मम हृदयतो गृहस्य चिन्ता सामस्त्येनैवाऽपगता । अन्यतश्चित्तं मे दुःखितमपि । यतः शङ्के– "अनेनाऽमितैश्वर्येणाऽस्य मनो विक्रियेत नवेति त्वं मां परीक्षमाणोऽसि । परमहं कृष्ण ! सगर्वमेव ब्रवीमि - ईदृक्षाः क्षणभङ्गुरा मृगतृष्णायिता धनसंपत्तीर्वितीर्य कामं शतं वारान् परीक्षस्व । तवैव कृपयोन्मीलितान्तार्दृष्टिः समलोष्टकाञ्चनश्चाऽहं त्वत्परीक्षायामुत्तीर्णो भवेयमेवेति मेऽस्ति द्रढीयान् विश्वासः । परमेतामीदृशीं परीक्षां त्वमकरोः, ययाऽहं क्षणमपि लब्धावकाशो नाऽस्मि । यतो "युगनायको विश्वक्रान्तिकारी सर्वशक्तिमान् श्रीकृष्णोऽस्य द्वितीय आत्मैवाऽस्ति । अतोऽस्माकं श्रीदामा राज्ञां सामन्तानां भूमिपतीनाम् च सर्वेषामीष्टे" इति धारणया वैयक्तिकं स्वार्थं पञ्चमं पुरुषार्थमिव मत्वा तं सिषाधयिषूणाम्, भौतिकं विभवमेवाऽराध्यमिष्टदेवमिव मत्वा तं स्वकोषे साक्षाच्चिकीर्षूणाम्, एषणात्रयपारवश्यात्

अन्तःस्थसपत्नषट्कापेक्षया बाह्यिकान् दृष्टसपत्नानेव स्वकल्याणविघातकान् मत्वा तेभ्य आत्मानम् स्वस्य संपत्तिं च रिरक्षिषूणाम् च कर्मयोगविपक्षाणां जनानां च कृते साम्प्रतम् मम गृहम् आशाकेन्द्रम्, स्वार्थधाम च भवदस्ति । तेन सोपायनीभूय विनम्रीभूय नाना मिथ्यासंबन्धान् प्रदर्श्याऽभिनाट्य च स्वार्थ सिषाधयिषया मद्दर्शनाय समागच्छताम् तेषां तुमुलेन गतागतेन मद्गृहं साम्प्रतम् नितान्तमशान्तमस्ति । सखे कृष्ण । त्वं वद- तादृशैरन्तः कलुषैरसंख्यैर्जनैः सङ्गम्य, संलप्य क्व मे जपः, क्व मे पाठः क्व भगवच्चिन्तनम् क्व मे रचनात्मकानि सेवाकार्याणि, क्व तैर्विश्व-राष्ट्र-समाजभक्तैः कार्यकर्तृभिः संपर्को मन्त्रणा वा ? सर्वैव मे दिनचर्या साम्प्रतं विहन्यमानाऽस्ति । साम्प्रतम् मम हृद्येषैव चिन्ता वरीवर्धि - "अस्मात् विघातात् कथं स्वां दिनचर्याम् रक्षेयम् ? कथंऽऽवात्मनः समाजसेवाकार्यक्रमं सञ्चालयेयम् ? इति ।

कीदृशे दुरुत्तरे संकटे पतितोऽस्मि— हरिरेव जगत् जगदेव हरिः- एवं जानानोऽहं यदि समयरक्षणाय समागतानाम् तादृशानामपि जनानां हरिभावनया समादरं न कुर्याम्, अवहेल्य सङ्गमावसरमपि न दद्याम्, सर्वभूतस्थस्यैव परात्मनोऽवमानना भवेत् अथ दद्याम् । मिथ्यागल्पेन, शिष्टाचाराडम्बरेणैवामूल्य समयस्याऽपव्ययात् मम सर्वतः कार्यहानिर्भवेत् । एषाऽसह्या संकटस्थितिः केवलं त्वदनुग्रहप्राप्तस्य महतो मद्भौतिकवैभवस्य दुष्परिणतिरस्ति । किं तवैव परमः स्नेहो मम कर्मयोगसाधनां विघ्नन्नस्ति । अतोऽस्य सुधाराय सखे कृष्ण । मां तस्यां स्थितौ प्रापय, यत्र मम नित्यकर्माऽपि निष्प्रत्यूहं चलतु भगवतो विराट्स्वरूपस्य विश्वस्य, राष्ट्रस्य, समाजस्य च रचनात्मकानां सेवाकार्याणां च संचालनं मम निर्विघ्नं भवतु, तदर्थे निष्कामैर्विशुद्धान्तरात्मभिर्विश्वराष्ट्रसमाजसेवकैः कार्यकर्तृभिरेव संपर्को मन्त्रणा च भवताम् । आत्मनोऽन्तरवशिष्टानां सङ्कल्पानां तेष्वेव पवित्रेषु सेवाकार्येषु विलयनं जायताम् । सदा सत्यरूपस्य परात्मनो हृदि दर्शनं भवतु । सखे कृष्ण । विश्वसाम्राज्येभ्योऽपि वरिष्ठया तवाऽनुकम्पया प्रपन्नस्य मे एताः प्रार्थनाश्च पूरिता भवन्तु

तमसो मा ज्योतिर्गमय ।
असतो मा सद् गमय ।
मृत्योर्मा अमृतं गमय ।
ॐ नमः शिवाय

वाणाब्धम व्योमनेत्र (२०४५) मिते वैक्रमवत्सरे।
कार्तिके मासि, धीमद्भिः संस्तुते विजयादिने॥
पूर्णनाम्ना मया कृष्णश्रीदाम चरितात्मकः।
लिखित्वाऽयमुपन्यासोऽद्य समाप्तिमनीयत॥
'जयतु संस्कृतम्'



प्र.